

# पूजापङ्कजभास्करः

खेमराज श्रीकृष्णदास प्रकाशन बम्बई

# पूजापङ्कजभास्करः

खेमराज श्रीकृष्णदास प्रकाशन   बम्बई

॥ श्रीवेंकटेश्वराय नमः ॥



श्रीमद्विबुधकुमुदकुमुदबान्धवशीलौदार्यवीर्यचातुर्यगाम्भीर्यादिगुणचुञ्चुमिथिलादेशान्तर्गतदरभङ्गा राजधानीस्थविविधबिरुदावलिविराजमानमानोन्नतमहाराजाधिराजमिथिलाधीशश्रीरुद्रसिंहकुमारबाबुश्री मद्गुणेश्वरसिंहचरणसरोजयुगलसन्निधौ असकृत्साष्टाङ्गं प्रणम्य विज्ञापयामि किञ्चित्, कलिमलकलुषित सकलजनोद्दिधीर्षया सभगीरथं प्रयत्नं कृत्वेमां पूजापङ्कजभास्कराख्यद्युनदीं पुरातनागमनिगमब्रह्मस दनात्प्राज्ञेतरस्वान्तभूमिमवतार्य प्राथमिकमुद्रणमार्गगामिनीं च कृत्वा पुनर्मुद्रणाद्यधिकारो मह्यमददुर तो महान्तं श्रीमत्कृतमुपकारभरं बिभर्मि पुनरीदृशा अनेके ग्रन्था भवदीयोद्यमात्रिलासितं भवेयुरि त्याशासे चाहं–श्रीकृष्णदासात्मजः खेमराजः ।

पुरा किलास्मिन् भारतवर्षे वेदमार्गानुयायिनस्तदर्थबोधौपयिकव्याकरणादिषडङ्गकर्त्तारः पाणिन्यादयस्तथा मीमांसान्यायसाङ्ख्ययोगाख्यषड्दर्शननिर्मातारो जैमिन्यादयो वेदोक्तधर्मप्रतिपादकस्मृत्यादिप्रवक्तारो याज्ञवल्क्यादयश्चालौकिकज्ञानशालिनो मुनयो जज्ञिरे ते चाजिघृक्षवोऽपि तदानींतनैः प्रबलारातिहृदयपाटनपटुतरोद्दण्डभुजदण्डविराजमानैर्गुणिगुणग्राहकैर्नृपैर्दानमानादिना सत्कृता यथासुखं कालं निन्युः, पश्चात् पूर्वजस्थापितधर्मपरायां मुनिसन्ततौ शृङ्गारादिरसप्रधानकाव्यनाटकादिजनितारो महाकवयः, काव्यादिगुणदोषविवेचककारिकादिग्रन्थोत्पादका नाट्यालङ्कारतत्त्वज्ञा गीतवाद्यनृत्यादिकलानिपुणा भरतादयश्च स्वधर्मपरायणा एव सम्बभूवुः, ततस्तन्मार्गवर्त्तिनः कालिदासादयोऽपि तत्कालीननृपैः सभाजिता मुमुदिरे, तदनु उदग्दिगायातयवनैराजवत्यस्मिन्देशे

गीर्वाणभारती बहुलपक्षचन्द्र इवानुदिनं ह्रासमेवाप्नोदाप्नोति च. तथा विद्वज्जनदौर्लभ्यजनितवेदशा स्त्राद्यपरिशीलनशालित्वादर्वाचीनानां प्रायशः सदाचारलोपो दुरितप्रवृत्तिश्च प्रादुरभूत दुःखोदर्कमे तत्सकलैहिकामुष्मिकार्थहानिकरञ्च तदेतत्सर्वं समालोच्य मिथिलदेशान्तर्गतदरभङ्गाराजधानीस्थेन विविधबिरुदावलीविराजमानमानोन्नतमहाराजाधिराजमिथिलाधीशश्रीरुद्रसिंहकुमारबाबुश्रीश्रीमद्गुणे श्वरसिंहेन दानमानादिसन्तुष्टस्वाश्रितविद्वन्मण्डलीकारित एष पूजापङ्कजभास्करनामा ग्रन्थो मन्नि कटेऽङ्कनाय प्रैष्यत सोऽयं स्वानुष्ठानजन्येन महता पुण्यचयेन सर्वेषां भारतवासिनां पूर्वजस्थिति प्रापकः स्यात्, अनेन च पुरातनधर्मः शुक्लपक्षशशीव प्रत्यहं वृद्धिं लभेत इति सर्वेषाम्बहुलादरपात्रं कृत्यमेनत्, मयैतन्मुद्रणं दृढपत्रेषु सर्वजनसौलभ्याय स्थूलायसाक्षरैः कृत्वायं प्राकट्यमनायीत्यलम्.

जम्बुद्वीपोदरगतमिदं भारतं वर्षमस्मिन् नीवृद्यः प्राक्ककुभि मिथिलाख्योऽस्ति तद्राजधानी ॥<br>
गुण्यैः स्तुत्यैर्धनिकनिवहैर्मौनिहन्त्री मुनीनां संप्रत्यस्ति स्वरिव दरभङ्गाख्यया लोकवित्ता ॥१॥<br>
तस्यान्द्रोढा कुपथगनृणाञ्चावमन्ता रिपूणान्दोग्धार्थानां सपदि गुणिसद्वृत्तयोर्वाञ्छितानाम् ॥

आदौ श्रीमद्गुणपदयुतामीश्वराख्यान्दधानः सिंहान्तां यो वसति मिथिलेशात्मजोऽन्वर्थनामा ॥ २ ॥ चित्रं यत्कविभिरवर्णि वर्ण्यतेऽपि बन्धुत्तंसस्तुखविचुम्बिनी यदीया ॥ आद्वीपाद्दिशिदिशि सन्ततं भ्रमन्ती निन्दन्ती भुवनमचन्द्रिकं च कीर्त्तिः ॥ ३ ॥ यत्प्रोत्साहप्रकटितधिया न्धीमताञ्ज्ञानबिम्बं पूजापद्मार्कं इह भगवद्धामदाताजनिष्ट ॥ श्रीरुद्रस्य प्रथितमिथिलाधीश्वरस्यात्मजो यो भूयात्सोऽयं सकलहितकृद्धर्मगोप्ता चिरायुः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥
वह्नित्रिनागवसुधाप्रमिते शकेऽस्य क्षेमादिराज इति तेन निजेंऽकनं सत् ॥ श्रीवेंकटेश्वरसुयंत्रगृहेऽस्य मुंबापुर्य्यां कृतं बुधमुदे खलु पुस्तकस्य ॥ १ ॥ ॥



## ॥ अथेयं पूजापङ्कजभास्कराभिधग्रन्थस्थविषयानुक्रमणिका लिख्यते ॥


| विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|
| वंशावली .... .... | १ | १ |
| प्रमाणग्रन्थनिर्देशः .... | २ | ९ |
| देवपूजायामधिकारानधिकारौ .... | ३ | ४ |
| स्त्रीशूद्रयोः शालग्रामशिलार्चने विचारः .... | ४ | ३ |
| तदयम्प्रकरणार्थः .... | ५ | ७ |
| अथ नित्यकाम्यपूजाविचारः ... | ६ | २ |
| तदयं समुदायार्थः .... | ८ | ९ |
| अथ नित्यपूजाकालः .... | ९ | ९ |
| तदयम्प्रकरणार्थः .... | ११ | १० |
| अथ देवपूजानाम्पूर्व्वापरीभावविचारः | १२ | ६ |
| तदयं समुदायार्थः .... | १४ | ४ |
| अथ देवपूजाधारवि० .... | १५ | १ |
| तथाचायम्प्रकरणार्थः .... | १८ | ९ |
| अथ देवपूजायाङ्करणमन्त्रविचारः .... | १९ | ७ |
| तदयम्प्रकरणार्थः .... | २० | ९ |
| अथोपचारपात्राणि .... | २१ | १ |
| तदयं समुदायार्थः .... | २३ | १ |
| अथोपचारविचारः .... | २३ | १० |
| तत्रासनम् .... | २५ | ९ |
| स्वागतम् .... | २६ | ९ |
| पाद्यम् .... .... | २६ | ६ |

| विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|
| अर्घ्यम् | २६ | ६ |
| आचमनीयम् | २६ | १० |
| पाद्यद्रव्याणि | २६ | ११ |
| मधुपर्कः | २७ | १ |
| स्नानीयद्रव्यप्रतिपत्तिः | २७ | ९ |
| स्नानम् | २७ | ११ |
| वसनम् | २८ | ११ |
| उपवीतम् | २९ | २ |
| गन्धः | २९ | ३ |
| अथ पुष्पाणि | २९ | ९ |
| धूपः | ३२ | ६ |
| दीपः | ३३ | २ |
| नैवेद्यानि | ३४ | २ |
| सूर्य्यादिभ्यो दत्तनैवेद्य-प्रतिपत्तिः | ३६ | २ |
| वन्दनम् | ३६ | ६ |
| तदयम्प्रकरणार्थः | ३६ | १० |
| अथ षोडशोपचार-द्रव्याणि | ३८ | २ |
| पूजाकाले सुवर्णादि-धारणम् | ४२ | ८ |
| पवित्रलक्षणम् | ४३ | १ |
| जलप्रतिमादावावाहन-विसर्ज्जनविचारः | ४४ | ७ |
| उपचारे हस्तनियमः | ४५ | १० |
| उपचारप्रोक्षणविचारः | ४६ | ८ |
| पूजायां दिङ्नियमः | ४६ | १२ |
| सावाहनदेवताध्यानम् | ४८ | २ |
| तिलकधारणम् | ४८ | ३ |
| स्नानीयादौ घण्टा-वादनम् | ४८ | ६ |
| गीतवाद्यादिकरणम् | ४८ | ७ |
| प्रकरणार्थः | ४९ | ४ |

| विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|---|---|---|---|---|---|
| अथ देवपूजाप्रयोगः .... | ५१ | १ | अस्य दीपे .... .... | ५६ | ८ | पुष्पाणि .... .... | ६३ | ९ |
| ध्यानम् .... .... | ५२ | १ | नैवेद्यानि .... .... | ५६ | ९ | पत्राणि .... .... | ६४ | ४ |
| अथ सूर्य्यपूजा .... | ५३ | १ | अथायमत्र प्रयोगः .... | ५८ | २ | धूपे .... .... .... | ६४ | ७ |
| अस्य ध्यानम् .... | ५३ | ६ | अथ गणपतिपूजा .... | ५९ | ७ | दीपे .... .... | ६४ | ९ |
| अस्यार्घेभविष्यपुराणम् | ५४ | ६ | अस्य ध्यानम् .... | ५९ | ७ | नैवेद्यम् .... .... | ६४ | १० |
| तत्रादौ गन्धाः .... | ५४ | ९ | निषिद्धपुष्पपत्राणि .... | ६० | ९ | पूजाप्रयोगः .... | ६५ | १ |
| अथ विहितपुष्पाणि .... | ५४ | ११ | अथाग्निपूजा ध्यानञ्च .... | ६१ | १ | अथ शिवपूजा सा च लिङ्गे प्रशस्ता .... | ६५ | ६ |
| विहितनिषिद्धानि ... | ५५ | ५ | अथ दुर्गापूजा .... | ६२ | १ | लिङ्गद्रव्याणि .... | ६५ | ८ |
| निषिद्धानि .... .... | ५५ | ६ | अस्या ध्यानम् .... | ६२ | ४ | अथ ध्यानम् .... | ६८ | ९ |
| पत्रेषु विहितानि .... | ५५ | ७ | अस्या अर्घः .... | ६३ | ६ | गन्धद्रव्याणि .... .... | ६९ | १४ |
| धूपास्तु .... .... | ५६ | ५ | गन्धाः .... .... | ६३ | ८ | | | |

| विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|---|---|---|---|---|---|
| पुष्पाणि विहितानि .... | ७० | १ | लिङ्गद्वयमेककाले नार्च्यम् | ७३ | ९ | गन्धद्रव्याणि .... | ७८ | ७ |
| निषिद्धपुष्पपत्राणि. .... | ७० | १२ | शूद्रस्पृष्टं लिङ्गं हरिश्च न नमेत् .... .... | ७३ | १२ | पुष्पाणि विहितानि .... | ७९ | ९ |
| विहितपत्राणि .... | ७१ | ३ | अथ विष्णुपूजा .... | ७४ | ३ | धूपाः .... .... | ८० | १२ |
| धूपाः .... .... | ७१ | ६ | शालग्रामादौ विष्णुपूजा प्रशस्ता.... .... | ७४ | १२ | दीपः .... .... | ८१ | ११ |
| दीपे घृतम् .... .... | ७१ | ८ | ध्यानम् .... .... | ७६ | ९ | नैवेद्यानि .... .... | ८२ | ३ |
| नैवेद्यम .... .... | ७१ | ९ | अर्घ्यं. .... .... | ७७ | १ | वस्त्रम् .... .... | ८३ | ९ |
| अथारात्रिका .... .... | ७१ | ११ | तत्र दक्षिणावर्त्तशङ्खः प्रशस्तः .... .... | ७७ | ६ | गीतवाद्यादि .... .... | ८३ | १२ |
| अथ नमस्कारः .... | ७२ | २ | घण्टावादनम्.... .... | ७७ | ८ | नीराजनम् .... .... | ८४ | ७ |
| मुखवाद्यम् .... .... | ७२ | ५ | | | | पूजाप्रयोगः .... .... | ८५ | ९ |
| प्रयोगस्तु .... .. | ७२ | ७ | | | | अथ पुरुषसूक्तेन विष्णु-पूजा .... .... | ८६ | ९ |
| एतन्नैवेद्यस्यभक्ष्यत्वं .... | ७२ | ३ | | | | | | |

| विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः | विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|---|---|---|---|---|---|
| ध्यानं यथा .... .... | ८६ | ९ | अथापराधः .... .... | ९७ | १२ | पूजोपकरणस्थापन- | | |
| पूजाक्रमः .... .... | ८७ | ७ | अपराधक्षमापणम् .... | ९९ | ३ | स्थानम् .... .... | १०५ | २ |
| अथैतत्प्रयोगः .... | ८९ | ५ | आगमोक्तेष्टदेवतापूजा.... | १०० | २ | भूतशुद्धिः ... .... | १०५ | ११ |
| अष्टाक्षरमन्त्रेण विष्णु- | | | रजतसुवर्णधारणम् .... | १०० | ४ | अथ प्राणस्थापनम् .... | १०९ | ८ |
| पूजा .... .... | ९१ | १० | आचमनम् .... .... | १०० | ८ | मातृकान्यासः .... | ११० | ८ |
| जपोऽप्यस्यातिप्रशस्तः .... | ९२ | ११ | सामान्यार्घ्यः .... .... | १०० | ११ | प्राणायामः .... .... | ११४ | ९ |
| अथ प्रदक्षिणम् .... | ९३ | ९ | मूलमन्त्रः .... .... | १०१ | ९ | पीठन्यासः .... .... | ११५ | ३ |
| अथ नमस्कारः .... | ९४ | ७ | अर्घ्यादिपात्रम् .... | १०१ | ११ | मानसपूजा .... ... | ११६ | ४ |
| अथ विसर्ज्जनम् .... | ९५ | ८ | द्वारदेवतापूजा ... | १०२ | १ | विशेषार्घस्थापनम् .... | ११७ | २ |
| अथ पादोदकधारणम्.... | ९५ | १२ | विघ्नोत्सारणम् .... | १०३ | ८ | पीठपूजा .... .... | ११९ | ३ |
| नैवेद्यभोजनम् .... | ९६ | १९ | आसनपूजा .... .... | १०४ | १ | पूर्व्वादिदिङ्नियमः .... | ११९ | ९ |

| विषयाः | पृष्ठं | पंक्तिः |
|---|---|---|
| अथ पूजा सा च यन्त्रे प्रशस्ता .... .... | १२० | १ |
| आवाहनप्रकारः .... | १२० | ६ |
| प्रतिष्ठितप्रतिमाशालग्रामादिष्वावाहनादिविचारः | १२२ | ८ |
| कुण्डलिनी तु द्विविधा.... | १२३ | ४ |
| षोडशोपचाराः .... | १२३ | १२ |
| पूजाङ्गहोमः .... .... | १२७ | ११ |
| अथ जपात्पूर्व्वमितिकर्तव्यता | १२८ | ८ |
| आरात्रिकम् .... .... | १३२ | ६ |
| ततःप्रदक्षिणम् .... | १३२ | १० |
| सर्व्वकर्म्मसमर्प्पणम् .... | १३२ | ११ |
| विसर्ज्जनम् .... .... | १३३ | २ |
| निर्म्माल्यक्षेपणम् .... | १३३ | ३ |
| चरणोदकग्रहणादि .... | १३३ | ६ |
| सङ्क्षेपपूजा .... .... | १३३ | ७ |
| मालानिर्णयः.... .... | १३४ | ९ |
| वस्त्रादिनिर्म्मितगोमुखविचारः ... .... | १३६ | ८ |
| विशेषान्तरम् .... ... | १३६ | ९ |
| अक्षमालादिषु कृतजपसंख्याया गणनद्रव्यविचारः .... | १३६ | १२ |
| मुद्राकथनम् .... .... | १३७ | ४ |
| पार्थिवशिवलिंगपूजा .... | १४० | १ |
| ब्रह्मपूजा .... .... | १४२ | ७ |
| पूजोत्तरकृत्यम्. .... | १४४ | ८ |
| काम्यपूजानामपिमोक्षसाधकत्वम् .... | १४४ | १० |
| ग्रन्थसमाप्तिः .... | १४९ | ३ |


इत्यनुक्रमणिका सपूर्णा.

श्रीगणेशाय नमः ॥ ॥ आसीत्खंडवलाकुलार्णवभवः श्रीमन्महेशश्शशी यो विद्यासु चतुर्दशस्वपि सुराचार्य्योपमोऽजायत । यं चक्रे मिथिलाधिपं बुधवरं सत्कृत्य दिल्लीपतिर्यत्कीर्त्त्या विशदीकृतेवनितले काकोपि हंसायते ॥ १ ॥ तद्वंशप्रभवोरिकक्षदहनो भूमीभुजामग्रणीः श्रीमन्माधवसिंहभूपतिरभूद्देवदेवद्रुमः । यस्यापत्यगणैर्विभाति मिथिला मेरुर्यथा निर्जरैर्योगाभ्यासपरो महाव्रतधरः काश्यान्तनुं यो जहौ ॥ २ ॥ तत्सूनुः स्वसपत्नवारणगणप्रद्रावणे केसरी भूमीपालशिरोमणिः सुखपुः श्रीछत्रसिंहोऽभवत् । यत्सौन्दर्यविनिर्ज्जितोमनसिजो मन्येऽतनुत्वं दधौ योनित्यं बहुशास्त्रवित्परिवृतो वेदान्तमभ्यस्तवान् ॥ ३ ॥ तस्माद्धर्म्मपरः प्रजासुखकरः सद्वृत्तवृत्तिप्रदो दानव्रातविनिर्ज्जितामरतरुः श्रीरुद्रसिंहो ह्यभूत् । स्मार्त्ताचारविचारचारुचतुरः प्रोद्यत्प्रतापानलो यद्भीत्या प्रविवेश वाडवमिषाच्छत्रुप्रतापोम्बुधौ ॥ ४ ॥ तस्मात्समुद्रादिव पूर्णचन्द्रो महेश्वरादिः स बभूव सिंहः । सदानसन्तोषितभूमिदेवः स्वाचारनिष्ठः कृतदेवसेवः ॥ ५ ॥ यस्माद्विश्वजनीनभूतिरारिहा जातः प्रजारञ्जकः श्रीलक्ष्मीश्वरसिंह इतिरहितक्ष्मामण्डलाखण्डलः । दाने कर्णसमो धिया गुरुसमो गाम्भीर्यरत्नाकरः स्वर्ल्लोकम्मघवेव शास्ति मिथिलां प्रौढप्रतापानलः ॥ ६ ॥ तस्यानुजो वरीवर्त्ति मिथिलेशकृतादरः । श्रीगु

णेश्वरसिंहो यः पितृदत्तमहीश्वरः ॥ ७ ॥ क्रियाकलापैर्ज्जमदग्नितुल्यो युधिष्ठिरेणापि समो वचोभिः । तीर्थाटनैर्यः शिवशर्म्मनाम्ना दानेन तुल्यः शिबिभूमिपेन ॥ ८ ॥ सोयं सूर्य्यगणाधिपौ हुतवहं दुर्गां शिवं श्रीहरिं स्वाभीष्टां परदेवतां च शुभदां नत्वा प्रजानां पतिम् ॥ विद्वद्भिर्म्मिथिले शमानिततरैर्ग्रंथान्विभाव्याग्रजान्पूजापङ्कजभास्करं वितनुते विद्वत्प्रमोदप्रदम् ॥ ९ ॥ वाक्यसंयोजनं त्वत्र कुरुते तदनुज्ञया । प्यारेशर्म्मा पगौंलीसं विष्णुदत्ततनूद्भवः ॥ १० ॥ ग्रंथास्तु महामहोपाध्यायश्रीदत्तकृतच्छन्दोगाह्निकाचारादर्शमहामहोपाध्यायहरिनाथकृतस्मृतिसारमहामहोपाध्यायविश्वेश्वरकृतस्मृतिसमुच्चयमहामहोपाध्यायशंकरमिश्रकृतच्छन्दोगाह्निकमहामहोपाध्यायवाचस्पतिमिश्रकृताचारचिन्तामणिमहामहोपाध्यायपक्षधरमिश्रकृततत्त्वनिर्णयमहामहोपाध्यायदेवनाथठक्कुरकृतस्मृतिकौमुदीमहामहोपाध्यायगणेश्वरमिश्रकृतहरिभक्तिदीपिकामहामहोपाध्यायशूलपाणिकृताचारविवेकमहामहोपाध्यायाभिनववाचस्पतिमिश्रकृतकृत्यप्रदीपमहामहोपाध्यायवामदेवकृतस्मृतिदीपिकाप्रभृतिमैथिलनिबद्धाःजीमूतवाहनान्वयापरादित्यकृतयाज्ञवल्क्यस्मृतिटीकापरार्करघुनन्दनभट्टाचार्यकृताह्निकतत्त्वगोपालभट्टकृतहरिभक्तिविलासप्रभृतिगौडनिबद्धाः विज्ञानेश्वरकृतयाज्ञवल्क्य

टीकामिताक्षरानीलकंठभट्टकृताचारमयूखकमलाकरभट्टकृतनिर्णयसिंधुरामाचार्यकृतस्मृत्यालोकप्रभृति दाक्षिणात्यनिबद्धाः विस्तरभिया तत्रतत्रोक्तप्रमाणवचनानि क्वचित्क्वचित्परिहृत्यप्रमेयमात्रंपूजा प्रकरणीयं सिद्धवदत्र लिख्यते ॥

अथदेवपूजा तत्र सर्वेषां वर्णानामधिकारः—“क्षमा शौचं दमः सत्यं दानमिन्द्रियनिग्रहः ॥ अहिंसागुरुशुश्रूषातीर्थानुसरणन्दया ॥ आर्ज्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ॥ अन भ्यसूया च तथा धर्म्मः सामान्य उच्यते ।” इति विष्णुवचनात् । स्वधर्मत्यागिनश्च शिवपू जने नाधिकारः—“स्वधर्मं यः परित्यज्य परधर्मरुचिर्भवेत् । तेनाहं पूज्यमानोपि गन्धं जि घ्रामिकौणपम् ॥” इति स्कन्दपुराणीयशिववाक्यात् ॥ ब्राह्मणस्य स्वधर्मत्यागिनोपि शि वपूजनेऽधिकारः—“वेदमन्त्रधनैर्विप्रैरहन्तुष्येऽर्च्चितः सदा । न विप्राणां करस्पर्शैरुद्विजामि वरानने ॥ शूद्रकर्मरतेनापि स्पृश्यमानो द्विजन्मना । हृष्यामि तेन सुतरां पूज्यमानश्च सुन्दरि ॥” इति गौरीं प्रति शिववाक्यादिति वाचस्पतिमिश्रप्रभृतयः ॥ स्मृतिदीपिकायां तु—स्वधर्मत्यागिनः शूद्रस्य शिवपूजने नाधिकारः ब्राह्मणस्य स्वधर्मत्यागिनोप्यधिकार इत्याह तन्मते क्षत्रियवैश्ययोः

स्वधर्मत्यागिनोरधिकारानधिकारयोरनध्यवसायापत्तिर्दोष इति बोध्यम् । दाक्षिणात्यास्तु–" ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते । स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥ " इति देवीपुराणात् स्वधर्मपराणामेव चतुर्णामपि वर्णानां विष्णुपूजाधिकारमाहुः । एवं स्त्रीशूद्रयोः शालग्रमशिलार्च्चने नाधिकारः–"ब्राह्मणस्यैव पूज्योहं शुचेरप्यशुचेरपि । स्त्रीशूद्रकरसंस्पर्शो वज्रादपि सुदुःसहः ॥ " इति शिष्टपरिगृहीतवचनात् । " प्रणवस्य जपाद्धोमाच्छालग्रामशिलार्च्चनात् । ब्राह्मणीगमनाच्चैव शूद्रश्चांडालतामियात् ॥ " इति वचनाच्चेति केचित् । अत्र पूजापदमर्च्चनपदं च स्पर्शपरम् उत्तरार्द्धार्थानुरोधात् । " भूमावप्सुतथाग्नौ च शालग्रामशिलात्मकः । सर्ववर्णैरहं पूज्यः शिलां शूद्रो न संस्पृशेत् ॥" इति विष्णुरहस्योक्तभगवद्वचनात्स्पर्शमात्रस्यैव निषेधाच्च तेन स्त्रीशूद्रैः स्पर्श एव न कार्यः पूजा तु कार्यैवेति बहवः आचारोपि तथैवेति बोध्यम् । गौडास्तु "स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर । स्पर्शने नाधिकारोस्ति विष्णौ वा शंकरेपि वा ॥ " इति वचनादनुपनीतेनापि विष्णुशिवयोः स्पर्शो न विधेय इत्याहुः । दाक्षिणात्यास्तु विष्णुधर्मे शालग्रामशिलां वापि चक्रांकितशिलान्तथा । ब्राह्मणः पूजयेन्नित्यं क्ष

त्रियादिर्न पूजयेत् ॥ " इति स्पर्शसहितपूजाविषयमित्युक्त्वा । स्त्रीणामनुपनीतानामित्यादिपूर्वोक्तवचनाद्विष्णुशिवयोः स्पर्शने स्त्र्यादीनामनधिकारमुक्त्वा " शालग्रामं न स्पृशेत्तु हीनवर्णो वसुन्धरे । स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः । मोहाच्चेत्संस्पृशेच्छूद्रो योषिद्वापि कदाचन । स्वपते नरके घोरे यावदाभूतसम्प्लवम् ॥ यदि भक्तिर्भवेत्तस्य स्त्रीणां वापिवसुन्धरे । दूरादेव स्पृशन्पूजाङ्कारयेत्सुसमाहितः ॥" इतिवराहोक्तेः शालग्रामशिलामात्रे निर्बन्धो न प्रतिमादौ । " सर्ववर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः । लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितानिच ॥" इति तत्रैवोक्तेरित्याहुः । तदयम्प्रकरणार्थः—देवपूजायाञ्चतुर्ण्णामपि वर्ण्णानामधिकारः स्वधर्म्मत्यागिनो ब्राह्मणेतरस्य शिवपूजने नाधिकारः स्त्रीशूद्रयोः शालग्रामशिलास्पर्शानधिकारेपि शालग्रामशिलायां स्पर्शशून्ये प्रतिमादौ स्पर्शसहितेपि पञ्चोपचारादिभिर्विष्णुपूजनेधिकार एव । गौडमते स्त्रीशूद्रानुपनीतानां विष्णुशिवस्पर्शने नाधिकारः ॥ दाक्षिणात्यमते तु चतुर्ण्णामपि वर्णानां स्वधर्मपराणामेव विष्णुपूजनेधिकारः शालग्रामेगोमत्यादिभवचक्राङ्कितशिलायां च स्पर्शपूर्वकपूजने क्षत्रियादीनामनुपनीतानां स्त्रीणां च नाधिकारः प्रतिमास्तु सर्वैः पूज्याः लि

ङ्गानि च मणिभिः कल्पितान्येव क्षत्रियादिभिः पूज्यानीति इति पूजापङ्कजभास्करे प्रथमःप्रकाशः॥ १॥

## अथ नित्यकाम्यदेवपूजाविचारः।

तत्र–"शिवम्भास्करमग्निञ्च केशवङ्कौशिकीमपि। म नसानर्च्चयन्याति देवलोकादधोगतिम् ॥" इति कालिकापुरराणात् शिवादीनांपञ्चानाम्पूजानित्या कौशकीं दुर्गां मनसाप्यनर्च्चयन्नित्यर्थः। तेनपूजाप्रशस्तपुष्पाद्यभावे मनसाप्येषाम्पूजा कार्य्येत्यर्थः फलति।अधोगतिं नरकगतिं तेनैषामर्चनस्य नित्यत्वम्। नित्यगणमध्यपाठेन विश्वजिन्न्यायानवता रात्। "वरम्प्राणपरित्यागः शिरसो वापि कर्त्तनम् ॥ न त्वसम्पूज्य भुञ्जीत केशवङ्कौशिकीं शिवम्" इति कालिकापुराणीयनिन्दाश्रवणाच्च ॥ एवम्ब्रह्मपूजापि नित्यैव–"ब्रह्माणंशङ्करं सूर्य्यन्तथैव मधुसू दनम् ॥ अन्यांश्चाभिमतान्देवान्भक्त्याचाक्रोधनोत्वरः। स्वैर्म्मन्त्रैरर्च्चयेन्नित्यम्पत्रैः पुष्पैस्तथाम्बुभिः। यो मोहादथवालस्यादकृत्वादेवतार्च्चनम्। "भुङ्क्ते स याति नरकं शूकरेष्वभिजायते ॥" इति कूर्म्म पुराणात्। विष्णुं प्रजापतिञ्चापि शिवंवाभास्करन्तथा ॥ तल्लिङ्गैः पूजयेन्मन्त्रैर्देवानेतान्समाहितः ॥ इत्यग्निपुराणाभिधानाच्च।"वरन्देहपरित्यागो वरन्नरकसम्भवः ॥ न चासम्पूज्य भुञ्जीतदेवम्पद्मसमुद्भव म्॥सदापूजयेत् यस्तुदेवंभक्त्या पितामहम्। "मनुष्यचर्म्मणा नद्धः स वेधानात्र संशयः।" इति पूजा

रत्नाकरीयभविष्यपुराणाच्च । "एवं च सूर्य्याग्निदुर्गाशिवविष्णुप्रजापतीनाम्पूजानित्येतिसिद्धम् । "आरोग्यंभास्करादिच्छेद्धनमिच्छेद्धुताशनात् । ज्ञानम्महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥" इत्यादिमत्स्यपुराणात्॥ "श्रान्तसंवाहनं रोगिपरिचर्य्या सुरार्च्चनम्॥ विप्रपादोदकोच्छिष्टमार्ज्जनं गो प्रदानवत् ॥ गवाह्निकन्देवपूजावेदाभ्यासःसरित्प्लवः । नाशयत्याशु पापानिमहापातकजान्यपि ॥" इति याज्ञवल्क्यवचनात् "देवमाल्यापनयनन्देवागारसमूहनम् । स्नपनं सर्वदेवानांगोप्रदानसमं स्मृ तम्॥" इतियमवचनाच्च फलश्रवणाद् देवपूजायाः काम्यत्वेपि काम्यप्रसंगेन नित्यनिर्वाहो बोध्य इति स्मृतिदीपिकायांवासदेवोपाध्यायः। माल्यं निर्म्माल्यम्। श्रीदत्तोपाध्यायवाचस्पतिमिश्राद यस्तुतर्पणोत्तरकर्मानन्तरम् ॥ "एवं सूर्यन्नमस्कृत्य त्रिःकृत्वा च प्रदक्षिणम् । द्विजंगाङ्काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत् ॥ आशयस्थञ्च सम्पूज्य प्रतिमास्थञ्च पूजयेत्"। इति विष्णुवचनात् सूर्य्याञ्जलिमुक्त्वा "ततो गृहार्च्चनंकुर्यादभीष्टसुरपूजनम् । जलाभिषेकपुष्पा णान्धूपादीनान्निवेदनैः ॥ इति विष्णुपुराणेभिधानाच्च, विष्णुपूजेष्टदेवतापूजयोरेव नित्यत्वम्। फल श्रवणादन्यदेवपूजानाङ्काम्यत्वमेवेत्याहुः ॥ आदिपदेन गन्धदीपनैवेद्यग्रहणम् ॥ सति सम्भवे पञ्चाना

मावश्यकत्वात् ॥ सा च पूजा सूर्याग्निदुर्गाशिवविष्णुपदेनैवविधेया सूर्यादिशब्दवाच्यत्वेनैव तेषान्दे वतात्वात् । शिष्टाचारादितिशूलपाणिः । गणपतिपूजा तु काम्यैव–'महागणपतेः कर्म्मसिद्धिम्प्राप्नोति मानव' इति देवीपुराणात् । एवम्पार्थिवशिवलिङ्गपूजापि काम्या "यः कृत्वा पार्थिवं लिङ्गम्पूजयेच्छु भवैदिकम् । इहैव धनवाञ्छ्रीमानन्ते रुद्रोभिजायते ॥" इति भविष्यपुराणायादितिबोध्यम् । दक्षि णात्यास्तु विष्णुशिवब्रह्मसूर्यशक्तिविनायकादिष्वभिमतान्देवतामर्च्चयेत् तत्रापि कलौ हरिहरयोः पूजा प्रशस्ता–"कलौ कलिमलध्वंसं सर्वपापहरं हरिम् । येर्च्चयन्ति नरा नित्यन्तेपि वन्द्या यथा हरिः ॥ नविष्णवाराधनात्पुण्यं विद्यते कर्म्म वैदिकम् । तस्मादनादिमध्यान्तन्नित्यमाराधयेद्धरिम् ॥ अथवा देवमीशानम्भगवन्तं सनातनम् । प्रणवेनाथ मन्त्रेण रौद्रेण त्र्यम्बकेणवा ॥" इत्याद्यभिधा नादितिवदन्ति । तदयं समुदायार्थः–सूर्य्याग्निदुर्गाशिवविष्णूनामिष्टदेवतायाश्च पूजानित्येति स्मृ तिकौमुदीकृद्देवनाठक्कुरः ॥ श्रीविष्णवभीष्टदेवतयोः पूजा नित्या सूर्य्याग्निदुर्गाशिवानान्तुनित्यका म्या तत्र काम्यप्रसंगेन नित्यनिर्वाहः साच पूजा सूर्य्याग्निदुर्गाशिवविष्णुपदमुच्चार्य्य विधेया गणपति पूजा तु काम्यैवेति स्मृतिदीपिकाकृद्धामदेवोपाध्यायः । श्रीविष्णोरभीष्टदेवतायाश्च पूजा

नित्यान्येषाङ्काम्येति श्रीदत्तोपाध्यायवाचस्पतिमिश्रादयः । ब्रह्मपूजानित्यैवेति शूलपाणिः। पार्थिवशिवलिङ्गपूजा काम्यैव । दाक्षिणात्यास्तु सूर्य्यादिदेवतानाम्मध्ये कामप्येकामभिम तान्देवतामर्च्चयेत् तत्रापि हरिहरयोः पूजा प्रशस्तेत्याहुरिति ॥ इति पूजापङ्कजभास्करे नित्यकाम्यदेवपूजाविचारो नाम द्वितीयः प्रकाशः ॥ २ ॥

**अथ नित्यपूजाकालः**–"स च चतुर्थेसंविभागे तु स्नानार्थम्मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥ पञ्चमेतुतथाभागेसंविभागोयथार्हतः ॥ " इत्यादिना दक्षोक्तमध्याह्नस्नानसन्ध्यावन्दनोत्तरो ज्ञेयः मध्याह्नस्नानसंध्यावन्दनोपरि 'ततो गृहार्च्चनङ्कुर्य्यादभीष्टसुरपूजनम्' इत्यादिना तद्विधानात् । यत्तु–" मैत्रम्प्रसाधनं स्नानन्दन्तधावनमञ्जनम् । पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् । " इति मनुवचनन्तत्काम्यपूजापरमिति वाचस्पतिमिश्रादयः । अत्राहुःपूर्वभागे तृतीयप्रहरात्पूर्वमेव तत्कार्य्यमित्यर्थमाश्रित्य विरोधपरिहारं शूलपाणिराह । यच्च–"सुखोषितास्तां रजनीम्प्रातः सर्वे कृताह्निकाः । विविशुस्तां सभान्दिव्याङ्क्षितवैरनुमोदिताम् ॥" इतिमहाभारतवचनन्तदप्रत्याख्येयकार्य्यानुरोधेनानन्यगत्या नित्यानामाह्निकानां सूर्य्योदयानन्तरम्मध्याह्नात्प्रागपिकरणमदुष्ट

मित्येवम्परम् । अत्र च पक्षे मध्याह्नस्नानसन्ध्यावन्दने अपि तदैवकार्य्ये क्रमभङ्गे बीजाभावात् तदन्ता
पकर्षन्यायाच्च।अत्र प्रातः पदेन "प्रातःकालो मुहूर्त्तांस्त्रीन्" इत्यादिना परिभाषितो ज्ञेयो न तु सूर्य्योद
यात्पूर्व्वकालः सूर्य्योदयं विना नैव स्नानदानादिकाः क्रियाः । इत्यादिना निषेधादिति मिश्रा
दयः।स्मृतिकौमुद्यान्देवनाथठक्कुरस्तु प्रातःस्नानेनापि नित्यपूजाधिकारी भवति परन्तु मध्याह्नस्नानस
न्ध्ये अपि नित्यतया विधातव्ये एवेत्याह । वस्तुतो दक्षाद्युक्तो मध्याह्नादिः स्नानादिकालो दृष्टार्थ एव
अत एव वैद्यकेपि मध्याह्नस्नानं तदुत्तरं भोजनमुक्तमिति शिष्टा अपि मध्याह्नोत्तरमासुरींवेलाम्परित्य
ज्य स्नानादिकमाचरन्ति उपवासादिविशेषसत्त्वे तु पूर्व्वाह्णएव स्नानं पञ्चयज्ञांश्च विधाय भुञ्जते ।
तस्मादहनि स्नात्वा पञ्चयज्ञान्कृत्वातिप्रातर्मध्याह्नञ्चनिषिद्धकालं विहायभोजनमेतावन्मात्रमेव
वैधमिति । यदि च दक्षोक्तकालस्य वैधत्वमपि तदापि कार्य्यान्तरानासक्तौ तद्बोध्यम् । ग्रामग
मनसभोपवेशनादिकार्य्यान्तरासक्तौ एकस्मिन्नेव कस्मिंश्चिदहर्भागे स्नानपञ्चयज्ञकरणम् । तथाहि
भारते–सुखोषितास्तां रजनीम्प्रातः सर्वे कृताह्निकाः । विविशुस्तां सभान्दिव्याङ्कितवैरनुमोदिताम् ॥
इति प्रथमाहर्भागे भोजनप्राक्कालीनमहः कृत्यन्दर्शयति न तु पूर्व्वाह्णमध्याह्नापराह्णानफलान्कुर्य्यात

यथाशक्ति धर्म्मार्थकामेभ्यः इति गौतमोप्यह्नः पूर्व्वमध्यपरभागान् यथाक्रमन्धर्म्मादिषु विदधत् पूर्व्वो क्तमर्थमनुमेने। अत एव सहवस्त्रो हरहराप्लुत्यान्यद्वस्त्रमाच्छादयेत् इति साङ्ख्यायनगृह्यम् । अहरहः पञ्चयज्ञान्निर्वपेत् इति शङ्खलिखितौचाहर्मात्रं विवक्षितवन्तौ । केचित्तु–'अहरेवाधिकारविशेषणम् । तदन्तर्गतमध्याह्नादिकालश्चाङ्गमात्रमिति तदसम्भवेप्यनुष्ठानम् सर्वशक्तिन्यायात्'इत्याहुरिति श्रीदत्तो पाध्यायकृतच्छन्दोगाह्निकम् । गौडास्तु–पूर्वाह्णेदेवतार्च्चनम्मुख्यम् । 'पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् । इति मनुवचने एवकारस्मरणात् । मध्याह्नेपि कूर्म्मपुराणे–"पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् । वैश्वदेवन्ततः कुर्य्याद्बलिकर्म्म ततः परम् ॥" इत्युक्तेरित्याहुः । तेन पूर्व्वाह्णमध्याह्न भिन्नकालस्य गौणत्वं सूचितवन्तः। देवार्च्चनन्तु प्रातर्होमोत्तरञ्चतुर्थभागे ब्रह्मयज्ञोत्तरं वा कार्य्य म्– " विधाय देवतापूजाम्प्रातर्होमादनन्तरम् । " कुर्वीत देवतापूजाम्पञ्चयज्ञादनन्तरम् इत्यादि द्विविधस्मृतेरिति दाक्षिणात्याः । तदयम्प्रकरणार्थः मध्याह्नस्नानसन्ध्यावन्दनोत्तरन्नित्यपूजा विधेया अप्रत्याख्येयकार्य्यानुरोधेन सूर्य्योदयानन्तरम्मध्याह्नात्प्रागपि काम्यपूजा तु पूर्वाह्णेइतिश्रीदत्ता दयः। प्रातः स्नात्वापिसूर्य्योदयोत्तरन्नित्यपूजादयो विधेयाः । मध्याह्नस्नानसन्ध्यावन्दने अपि

नित्यतया विधेये एवेति स्मृतिकौमुदी । श्रीदत्तोपाध्यायस्तु–कस्मिंश्चिदेकस्मिन्नहर्भागे राक्षसीं वेलाम्मुक्त्वा स्नानादिभोजनान्तङ्कर्म्म विधेयंमध्याह्नादिकालनियमा स्तु दृष्टार्थ एवेत्याह । पूर्वाह्णो मध्याह्नश्चाहर्भागो मुख्यः पूजाकालोन्यो गौण इति गौडाः । दाक्षिणात्यस्तु–प्रातर्होमोत्तर श्चतुर्थभागे ब्रह्मयज्ञानन्तरं वा देवपूजाविधेयेत्याहुः । इतिपूजापंकजभास्करे नित्यपूजाकालविचारो नाम तृतीयः प्रकाशः ॥ ३ ॥

अथदेवपूजानाम्पूर्वापरीभावविचारः तत्र सर्वादौसूर्य्यपूजा–'यावन्न दीयते भानोः' इत्यादि वचनात् । "यथा देवमयत्वाच्च तरणिर्लोकपूजितः । तथा धूपोपहारैश्च पूजयेत्प्रथमं रविम् ॥ अपूज्य प्रथमं सूर्य्यमपरान् यः प्रपूजयेत् । न तद्भूतकृतम्पाद्यं सम्प्रतीक्षन्तिदेवताः ॥" इति स्कन्द पुराणाच्च । ततः काम्यत्वेपि सकलविघ्नहरणद्वारा कर्म्मसिद्धिदायकत्वेन । "आदित्यङ्गणनाथ श्च देवींरुद्रं यथाक्रमम् । नारायणविशुद्धाख्यमंते च कुलदेवताम् ॥" इति पद्मपुराणवचनाच्च गणपतिपूजाकार्य्या । विशुद्धाख्यंवह्निङ्कुलदेवतामिष्टदेवताम् । अन्तेचेष्टदेवतापूजा आगन्तूनामन्ते भिनिवेशादुक्तवचनाच्चेति सकलपूजानिबन्धकारः । मध्ये दुर्गाशिवविष्णूनां क्रमेण पूजा कार्या

उक्तवचनात्पद्मपुराणे—"रविर्विनायकश्चण्डी ईशो विष्णुस्तु पञ्चमः । क्रमेणानेन पूज्यन्तेव्युत्क्रमेण महद्भयम् ॥" इत्यभिधानाच्च । अग्निपूजा तु तदनन्तरङ्कार्य्या "रविर्विनायकः" इति क्रमविरोध भयादिति महामहोपाध्यायवामदेवकृतस्मृतिदीपिकासंक्षेपे छन्दोगाह्निककृद्वामदेवोपाध्यायस्तु सूर्य्य गणपत्यग्निदुर्गाशिवविष्णवभीष्टदेवतेति क्रमेण पूजामाह । एवमेवमिथिलाधिपवासुदेवसिंहकारि तगोष्टिशर्म्मकृताह्निकोद्धाराभिनववर्द्धमानकृताह्निकविवेकप्राचीनशौरिशर्म्मकृताचारचिन्तामणिप्रभृ तिषूपलभ्यते । मिथिलायामाचारोप्येवमेव । ततः काम्या पार्थिवशिवलिङ्गपूजा आचारात् । ततो ब्रह्म पूजा सा च यद्यपि नित्या तथापि सकलदेवपूजान्ते पूजोपकरणशेषद्रव्यैः "ॐ ब्रह्मणे नमः" इत्यु च्चार्य्य कार्य्या शिष्टाचारादितिशूलपाणिः । गौडनिबन्धे तत्र प्रथमतः सूर्य्यपूजा—"अपूज्य प्रथमं सूर्य्यम्" इत्यादिब्रह्मपुराणात् प्रागुक्तपद्मपुराणवचनाच्च । यत्तु भविष्यपुराणे—"देवतादौ यदा मोहा द्गणेशो न च पूज्यते । तदा पूजाफलं हन्ति विघ्नराजो गणाधिपः॥" इत्यनेन गणेशपूजनमादावुक्तं तत्सूर्य्यपूजातिरिक्तेज्ञेयम् । 'आदित्यंगणनाथं च' इति पद्मपुराणैकवाक्यत्वात् । 'आदौ विनायकः पूज्योह्यन्ते च कुलदेवताः ।' इति बह्वृचगृह्यपरिशिष्टोक्तं गौर्य्यादिपूजनपरमिति कल्पतरुप्रभृतिभि

रपि सूर्य्यपूजनस्यादित्वमुक्तम्। एवञ्च सूर्य्यं गणेशं दुर्गां शिवं विष्णुञ्च सम्पूज्य ब्रह्माणमन्यांश्च पूजयेत्। गृहीतागममन्त्रस्य तु तत्तत्पूजनादेव पौराणिकपूजनसिद्धिः। तदनन्तःपातिनस्त्विष्टदेवस्य पृथक्पूजनमित्युक्तम्। स्मृत्यालोके दाक्षिणात्यरामस्तु–सर्व्वादौ सूर्यपूजा सर्व्वान्ते विष्णुपूजा मध्ये गणपत्यादिपूजा तत्र क्रमनियमो नेत्याह। तदयं समुदायार्थः–सूर्य्यगणपतिदुर्गाशिवविष्णवश्रीष्टदेवताः सम्पूज्य काम्यपार्थिवशिवलिङ्गपूजां विधाय सकलदेवपूजोपकरणशेषद्रव्यैः "ॐब्रह्मणे नमः" इत्युच्चार्य्य ब्रह्मपूजा कार्य्या इति शूलपाणिः। सूर्य्यगणपत्यग्निदुर्गाशिवविष्णुस्वेष्टदेताकाम्यपार्थिवशिवलिङ्गपूजां विधाय ब्रह्मपूजाविधेयेति शौरिशर्म्मसंक्षेपच्छन्दोगाह्निककृद्वामदेवोपाध्यायादयः। गौडास्तु–एवमेवोक्ता गृहीतागममन्त्रस्य आगमोक्तरीत्या तत्तद्देवपूजनादेव पौराणिकपूजासिद्धिः। तदनन्तःपातिनस्त्विष्टदेवस्य पृथक् पूजनङ्कार्य्यमित्याहुः। दाक्षिणात्यरामस्तु–सर्वादौ सूर्य्यस्य सर्वान्ते विष्णोः पूजा कार्य्या मध्ये गणेशादिपूजने क्रमनियमो नास्तीत्याह। इति पूजापंकजभास्करे पूजाक्रमविचारो नाम चतुर्थः प्रकाशः॥ ४॥

अथ देवपूजाधारविचारः तत्र प्रतिमायां सर्वदेवतापूजा प्रशस्ता । ध्यानाद्यनभिज्ञस्त्रीबाला दीनान्तुतत्रैव सा प्रशस्ता । प्रतिमा तु गृहे अङ्गुष्ठपर्वादारभ्य वितस्तिपर्यन्तप्रमिता सप्ताङ्गुलप्रभृति वितस्तिप्रमिता वा धार्य्या "अङ्गुष्ठपर्वादारभ्यवितस्तिंयावदेवतु ॥ गृहेषु प्रतिमा धार्य्या नाधिका शस्यते बुधैः ॥" इति मत्स्यपुराणात्, "सप्ताङ्गुलं समारभ्य यावच्च द्वादशांगुला । गृहे ष्वर्च्चा समाख्याता प्रसादे चाधिका शुभा ॥" इति देवीपुराणाच्च । सा च सुवर्णादिभिर्विधा तथ्या "सौवर्णी राजती वापि ताम्री रत्नमयी तथा । शैलदारुमयी वापि लौहसंघमयी तथा ॥ रीतिका धातुयुक्ता वा कांस्यताम्रमयी तथा । शुभदारुमयी वापि देवतार्च्चा प्रशस्यते ॥" इति मत्स्यपुराणात् । शैलदारुमयी शैलमयी दारुर्देवदारुस्तन्मयी चेत्यर्थः । लौहसं घमयी लौहं सुवर्णादितत्समूहमयी । रीतिकाधातुयुक्ता रीतिकाधातुः पित्तलस्तद्युक्ता । कांस्यताम्रमयी कांस्यताम्रोभयमयी । शुभदारुमयी यज्ञियदारुमयी । चतुर्भुजा देवीप्रतिमा गृहे उप विष्टा न धार्य्या।देवीपुराणे-" ऊर्द्धस्थिता गृहे कार्य्या सदा देवी चतुर्भुजा । अन्यथा तु न कर्त्तव्या कृता भयकरीमता ॥" इत्यभिधानात् । अष्टभुजा तूपविष्टैव धार्य्या " तथा चाष्टभुजा कार्य्या

प्रासादे वा गृहेथवा । ऊर्द्धस्थिता सदा घोरा रौद्री चापि नरेश्वर॥"इति तत्रोक्तेः । तथा-"शैलजा न गृहे पूज्या ह्यभावात्काष्ठजा शुभा । तथा न गृहे सजटा शुभा । " एवमूर्द्धदृष्टिरधोदृष्टिस्तिर्य्यग्दृष्टि र्म्मानोन्मानहीना च प्रतिमा निषिद्धा " नाधो दृष्टिर्नोर्द्धदृष्टिर्न्तिर्य्यग्दृष्टिर्न्न कारयेत् । " इति नर सिंहपुराणात् । अप्रतिष्ठिता तु न क्वापि निषिद्धेति तत्रावाहनादिविसर्ज्जनान्ता पूजाऽविरुद्ध प्रति ष्ठितायास्तु कदाचित्पूजालोपे प्रत्यवाय इति श्रीदत्तादयः । नास्तिकस्थापिता तु प्रतिमा न पूजनीया स्तिकेन । नार्म्मदलिङ्गशालग्रामादीनाम्पूजाधारत्वं विशेषपूजाप्रकरणे वक्ष्यते । एवञ्जलादीनामपि पूजाधारत्वमाह शातातपः-" भूमावप्सु तथाग्नौ च दिवि सूर्य्ये च देवताः । नित्यमन्ने हिरण्ये च गोषु च ब्राह्मणेषु च ॥ अप्सु देवा मनुष्याणान्दिवि देवा मनीषिणाम् । काष्ठलोष्टेषु मूर्खाणां युक्तस्यात्मनि देवताः ॥" दिवि आकाशे देवताः सन्तीति शेषः । एषु स्थानेषु देवताः पूज्या इत्यर्थः । अन्यथा व्य र्थता स्यात् । अत एव पूजाप्रकरणे इदं वचनंलिखितम् । तत्र भूमौ जले आकाशे च भावेन देवतामा रोप्य गन्धादिना पूजा कार्य्या । अग्नौ होमरूपापि सूर्य्यमण्डले ध्यानेनेति बोध्यम् । अन्नादीनान्तु न देवतान्तराधारत्वम् आचारविरोधात् । किन्तुतेषाम्पूज्यत्वार्थमेव देवतान्तराधारत्वमभिहितम् । तथा

चमनुः–" पूजयेदशनन्नित्यम्॥" इति । नारदोप्याह–"लोकेस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥ एतानि सततम्पश्येन्नमस्येदर्च्चयेच्च यः । प्रदक्षिणानि कुर्वीत तथास्यायुर्न हीयते ॥" इति तस्माद्भूम्यादीनान्देवतांतराधारत्वमन्नादीनाम्पूज्यत्वमेवेति स्थितम् । "युक्तस्यात्मनि"इति योगिनाम्बाह्योपचाराभावादन्तर्य्यजनकर्त्तव्यतापरम् । अयञ्च सामान्येनाधारविधिः शिवपूजायामप्यविरुद्धः । अत एव "आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका । आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते ॥" इति लिङ्गत्वेनाकाशस्तुतिरपि गृहस्थस्य जले शिवपूजा निषिद्धेति तदागमविदः । गौडास्तु–विष्णुः " आप आयतनं यस्मात्तस्मात्तासु सदा हरिः ॥" अत एव बौधायनः–" प्रतिमास्थानेष्वप्स्वग्नावावाहनवर्ज्जम् " इति शातातपोपि–" अप्सु देवा मनुष्याणान्दिवि देवा मनीषिणाम् । काष्ठलोष्टेषु मूर्खाणां युक्तस्यात्मनि देवताः ॥" इति आत्मनीति योगिनो बाह्योपचारनिरासेन कर्तव्यतापरमित्याहुः । दाक्षिणात्यास्तु भागवते–" शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥" तत्रैव कालकौमुद्यां स्कान्दे–" अक्षादल्पपरीमाणन्न लिङ्गं कुत्रचिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वन्न कदाचित्समाचरेत् ॥"

" अक्षोशीतिर्गुञ्जाः गुञ्जापञ्चाद्यमाषकाः ते षोडशाक्षः कर्षोऽस्त्री ॥ " इत्यमरकोशात् । प्रयोगपारिजाते–"नवाष्टसप्ताङ्गुलिकं लिङ्गं श्रेष्ठमिहोच्यते । षट्पञ्चकचतुर्म्मानं मध्यमं त्रिविधं स्मृतम्॥"त्रिद्व्येकाङ्गुलिमानंयत् त्रिविधन्तत्कनीयसम् । एवन्नवविधम्प्रोक्तञ्चरलिङ्गं यथाक्रमम् ॥" इति विष्णुधर्मोत्तरे–"नार्च्या गृहेश्मजामूर्तिश्चतुरङ्गुलतोधिका । नवितस्त्यधिका धातुसंभवा श्रेय इच्छता ॥ " इति चाहुः । तथा चायम्प्रकरणार्थः–प्रतिमायां सर्वदेवतापूजा प्रशस्ता । ध्यानाद्यविदुषान्तत्रैव सा प्रशस्ता । सा च प्रतिमाङ्गुष्ठपर्वादारभ्य वितस्तिपर्यन्तप्रमाणा । सप्ताङ्गुलां समारभ्य द्वादशाङ्गुलिपर्यन्तप्रमाणा वा गृहे धार्या । प्रासादे चाधिकापि । सापि पुनः सुवर्णमयी रजतमयी ताम्रमयी रत्नमयी शैलमयी देवदारुमयी सुवर्णरजतताम्रसमूहमयी पित्तलमयी कांस्यताम्रोभयमयी यज्ञियदारुमयी वा कार्य्या । चतुर्भुजा देवी प्रतिमा गृहे ऊर्ध्वस्थितैव । अष्टभुजा तूपविष्टैव गृहे कार्य्या ऊर्ध्वदृष्टिरधोदृष्टिस्तिर्यग्दृष्टिर्न्यङ्गा मानोन्मानहीना च प्रतिमा सर्वथा निषिद्धा शैलजा सजटा च गृहे निषिद्धा । एवम्भूमौ जले आकाशे च भावेन देवतामारोप्य गन्धादिना पूजा कार्य्या । अग्नौ होमरूपापि । सूर्य्यमण्डले ध्यानेनेत्यवगंतव्यं गृहस्थस्य तु जले शिवपूजा निषिद्धा । अत्र गौ

डैस्तु—प्रतिष्ठितप्रतिमाभूमिजलाग्निष्वावाहनंविनैव पूजाकार्य्येत्युक्तम् । दाक्षिणात्यैस्तु—"शैली दारु मयी लौही लेख्या लेप्याचसैकती । मनोमयी मणिमयी" इत्यष्टधा प्रतिमामुक्त्वा लिङ्गन्त्वक्षपरिमा णतो न्यूनपरिमाणकन्न कार्यम् । अक्षोशीतिर्गुञ्जाः । आरोहे नवाष्टसप्ताङ्गुलिपरिमितं श्रेष्ठम् । षट् पञ्चचतुरङ्गुलिपरिमितम्मध्यमम् । त्रिद्व्येकाङ्गुलिपरिमितमधमं ज्ञेयम् । प्रतिमा तु गृहे चतुरङ्गु लितोधिका न कार्या धातुमयी वितस्त्यधिका न कार्य्येत्युक्तमिति॥ इति पूजापङ्कजभास्करे पूजाधा रविचारो नाम पञ्चमः प्रकाशः ॥ ५ ॥

अथ देवपूजायाङ्करणमन्त्रविचारः । "ब्रह्माणं शङ्करं सूर्य्यन्तथैव मधुसूदनम् । अन्यांश्चाभि मतान्देवान्भक्त्या चाक्रोधनोत्वरः । स्वैर्म्मन्त्रैरर्च्चयेन्नित्यम्पत्रैः पुष्पैस्तथाम्बुभिः॥" इति कूर्म्मपुराणव चनात्, " तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः । " इत्यग्निपुराणवचनाच्च ब्राह्मणादिवर्णत्रयेण तत्तद्देवताकवेदमन्त्रेण तत्तद्देवतापूजा विधेया विष्णुपूजा तु विष्णुसंहितास्थविष्णुकल्पेन पुरुषसूक्तेन च विधेया वेदमन्त्रानभिज्ञैस्त्रैवर्णिकैस्तु पञ्चरात्रोदितकल्पैः पूजा विधेया । " अभावे वेदमन्त्राणा म्पञ्चरात्रोदितो विधिः । स्त्रीशूद्रयोर्न तच्छ्रोत्रपदवीमपि यास्यति ॥" इति विष्णुपुराणात् । तत्र च य

स्य यस्मिन्कल्पे दीक्षा तेन स कल्प आदरणीयः । दीक्षामन्त्रविहीनैस्त्रैवर्णिकैस्तत्तन्मन्त्रं विना प्रणवादिचतुर्थ्यन्तनमोन्ततत्तद्देवतानाम्नापि कृतापूजा महाफला । नत्वदीक्षितस्य पूजायामनधिकारः प्रमाणाभावात्, दीक्षामन्त्रविहीनेनापीत्याद्यभिधानाच्च । सर्वानुपचारानुक्त्वा भविष्यपुराणे–“अयं विनैवमन्त्रेण पुण्यराशिः प्रकीर्त्तितः। स्यादयम्मन्त्रयुक्तश्चेत्पुण्यंशतगुणोत्तरम् ॥” इत्युक्तेश्च । स्त्रीशूद्रैस्तु प्रणवस्थाने नमःशब्दएव पठनीयः। स्मृतिकौमुद्यान्देवनाथठक्कुरास्तु-स्त्रीशूद्रैरपि पञ्चरात्रोदितविधिरुपादेयः ‘स्त्रीशूद्रयोर्न तच्छ्रोत्रपदवीमपि यास्यति’ इतिवचनस्थतच्छब्देनवेदमन्त्रस्यैव परामर्शादित्याहुः । एवञ्च पञ्चरात्राप्रामाण्याभिधानमनवबोधात् महाभारतादौ प्रशंसितत्वात् । न च पञ्चरात्राप्रामाण्यबोधकभट्टवार्त्तिकवेदान्तिनयादिविरोधः स्यादितिवाच्यं तस्य वसिष्ठाद्युक्तपञ्चरात्रभिन्नवेदविरोधिमोक्षोपायप्रदर्शकशाण्डिल्याद्युक्तपञ्चरात्रपरत्वादितिबोध्यम्। तदयम्प्रकरणार्थः–वेदमन्त्राभिज्ञैस्त्रैवर्णिकैः तत्तद्देवताकवेदमन्त्रैस्तत्तद्देवतापूजा विधेया विष्णुपूजा तु वेदमन्त्रानभिज्ञैस्त्रैवर्णिकैः पञ्चरात्रोदितेन विधिना विधेया तत्रापि यस्य यस्मिन्कल्पे दीक्षा तेन स कल्प आदरणीयः दीक्षामन्त्रविहीनैस्त्रैवर्णिकैस्तु प्रणवादिनमोन्तचतुर्थ्यन्ततत्तद्देवतानाम्ना पूजा विधेया । स्त्रीशूद्रैस्तु प्रणवस्थाने

नमःशब्दएवोच्चारणीय इति ॥ इति पूजापङ्कजभास्करे पूजामन्त्रविचारो नाम षष्ठः प्रकाशः ॥ ६ ॥

अथोपचारपात्राणि । तानि च दारुमृत्तिकापद्मपत्रपलाशपत्रताम्ररूप्यसुवर्णमयानि अर्घस्नान नैवेद्यबलिधूपादिकार्य्ये उत्तरोत्तरम्प्रशस्तानि इतिच्छन्दोगाह्निके श्रीदत्तोपाध्यायाः । यद्यपि "दारवे ण तु पात्रेण दानादर्घस्य यत्फलम् । तस्माच्छतगुणम्प्रोक्तम्मृत्पात्रेण नराधिप ॥ ताम्रजेनार्घपात्रेण पु ण्यन्दशगुणं स्मृतम्। पलाशपद्मपत्राभ्यान्ताम्रपात्रसमम्भवेत्॥रौप्येण चार्घपात्रेण लक्षांशैरधिकम्भवेत् सुवर्णपात्रविन्यस्तमर्घ्यङ्कोटिगुणम्भवेत् ॥ " इत्यर्घप्रकरणस्थे स्मृतिसारधृतवचनेऽर्घपदमस्ति । त थापि स्नाननैवेद्यादेरपिउपलक्षकन्तत् । अन्यथा स्नाननैवेद्यादिदाने पात्रानध्यवसायापत्तिः स्यादिति तदाशयः । विष्णोः स्नानीयदाने तु शङ्खः प्रशस्तः" शङ्खस्थितेन तोयेन यः स्नापयति केशवम् । कपिलानां सहस्रस्य दत्तस्य फलमाप्नुयात्॥" इति शङ्खमाहात्म्ये विष्णुधर्म्मोत्तरेभिधानात् । शिवे तु शंखो निषिद्धः "नशिवंशंखवारिणा" इति वचनात् । दक्षिणामूर्त्तिशिवपूजायान्तु शंखमनुजानन्ति वृद्धाः । संहितायां विधानादिति शूलपाणिः । गौडास्तु-"न दद्याद्भास्करायार्घं शंखतोयैर्विचक्षणः" इति कालिकापुराणात्सूर्य्येपि शंखन्निषेधयन्ति स्नाने तु सौवर्णराजतकुम्भाभावे ताम्रकु

म्भः प्रशस्तस्तदभावेमृत्कुम्भः । देवतान्तराणामपि स्नाने कुम्भरूपाणि पात्राणि प्रशस्तानि ।
“मृत्कुम्भात्ताम्रजैः कुम्भैः स्नानं शतगुणोत्तरम् । रौप्यैर्लक्षोत्तरम्प्रोक्तं हैमैः कोटिगुणोत्तरम् ॥ ”
इति भविष्यपुराणात् । विष्णोर्नैवेद्यदाने तु सुवर्णपात्रादपि ताम्रपात्रमधिकफलकमिति छन्दोगा
ह्निकम् । भग्नन्तु पात्रं सर्वत्र निषिद्धम् । ताम्रसुवर्णरूप्याश्ममुक्तास्फटिकशङ्खशुक्तिपात्राणि
भग्नान्यपि प्रशस्तानि तानि च पुण्डरीकाकृतीनि नीलोत्पलाभानि रत्नादिविरचितानि काञ्ची
घनयुतानि नानाविचित्ररूपाणि यथाशोभं यथालाभङ्कल्पनीयानि तेषु चारोहपरिणाहाभ्यां षट्
त्रिंशदङ्गुलिपरिमितान्युत्तमानि चतुर्विंशत्यङ्गुलिपरिमितानि मध्यमानि द्वादशाङ्गुलिपरिमिता
न्यधमानि वस्वङ्गुलिपरिमितन्यूनानि तु नैव कार्य्याणि । “ षट्त्रिंशदंगुलम्पात्रमुत्तमम्परि
कीर्तितम् । मध्यमन्तु त्रिभागोनङ्कनिष्ठन्द्वादशांगुलिम् ॥ वस्वंगुलिविहीनन्तु न पात्रंकारयेत्क्व
चित् । नानाविचित्ररूपाणि पुण्डरीकाकृतीनि च ॥ शंखनीलोत्पलाभानि पात्राणि परिकल्प
येत । रत्नादिखचितान्येव काञ्चीघनयुतानि च । यथाशोभं यथालाभम्पात्राणि परिकल्पयेत् ॥ ”
इति देवीपुराणात् । त्रिभागोनम् तृतीयभागहीनं चतुर्विंशत्यंगुलमित्यर्थः । शंखे तु परिमाणनि

यमो नास्तीति शूलपाणिः । तदयंसमुदायार्थः–अर्घस्नाननैवेद्यबलिधूपादिकार्य्ये दारुमृत्तिकापद्मपत्र पलाशपत्रताम्ररूप्यसुवर्णमयानि पात्राणि उत्तरोत्तरम्प्रशस्तानि विष्णोः स्नानीयदाने शङ्खः प्रशस्तः नैवेद्ये तु सुवर्णपात्रादपि ताम्रपात्रमधिकफलं स्नपने तु मृत्तिकाताम्ररजतसुवर्णकुम्भा उत्त रोत्तरम्प्रशस्ताः शिवस्यार्घादौ शंखो निषिद्धः । गौडमते सूर्यार्घेपि शंखो निषिद्धः । ताम्रसुवर्णरू प्याश्ममुक्तास्फटिकशंखशुक्तिपात्रातिरिक्तानि भग्नपात्राणि निषिद्धानि तानि च पुण्डरीकाकृतीनि नीलोत्पलाभानि रत्नादिखचितानि काञ्चीघनयुतानि नानाविचित्ररूपाणि यथाशोभं यथालाभङ्क ल्पनीयानि तानिचारोहपरिणाहाभ्यांषट्त्रिंशदंगुलिपरिमितान्युत्तमानि चतुर्विंशत्यंगुलिपरिमितानि मध्यमानि द्वादशांगुलिमितान्यधमानि अष्टांगुलन्यूनानि तु न कार्य्याणि शंखे तु परिमाण नियमाभाव एवेति ॥ इति पूजापंकजभास्करे उपचारपात्रविचारो नाम सप्तमः प्रकाशः ॥ ७ ॥

अथोपचारविचारः तत्र हारीतः–“ सपर्य्या विविधा प्रोक्ता तासामेकां समाश्रयेत् । गन्धादि का निवेद्यान्ता पूजा पञ्चोपचारिका ॥ ” इति कालिकापुराणम् । “ गन्धपुष्पे तथा धूपो दीपो नैवेद्यमेव च । ” पितामहोप्याह–गन्धादिकान्निवेद्यान्ताम्परिचर्य्याम्प्रकल्पयेत् । इतीयमेका

अपरा दशोपचारा–" अर्घपाद्याचमनीयमधुपर्काचमनानि च । गन्धादिपञ्चकञ्चेति उपचारा दशोदिताः ॥" इति अत्र पाद्यम्प्रथममित्यन्ये । अत्र मधुपर्कदानात्पूर्वं स्नानीयन्देयमिति गौडाः । तृतीया षोडशोपचारा–"आसनं स्वागतञ्चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्काचमनस्नानवसनाभरणानि च । गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनन्तथा ॥" इति चतुर्थी अष्टादशोपचारा–"आसनावाहने चार्घ्यम्पाद्यमाचमनन्तथा । स्नानंवस्त्रोपवीतञ्च भूषणानि च सर्व्वतः ॥ गन्धम्पुष्पन्तथा धूपं दीपमन्नेन तर्पणम् । माल्यानुलेपने चैव नमस्कारविसर्ज्जने॥" इति पञ्चमी षट्त्रिंशोपचारा–"आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरुक्षणे । सम्मार्ज्जनं सर्प्पिरादिस्नपनावाहने ततः ॥ पाद्यार्घाचमनीयानि स्नानीयमधुपर्कको । पुनराचमनीयञ्च वस्त्रयज्ञोपवीतकम् ॥ अलंकारो गन्धपुष्पे धूपदीपौ तथैव च । ताम्बूलानि च नैवेद्यम्पुष्पमाला तथैव च ॥ अनुलेपनञ्च शय्या च चामरव्यजनन्तथा । आदर्शदर्शनञ्चैव नमस्कारोथ नर्त्तनम् ॥ गीतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणम् । दन्तकाष्ठप्रदानञ्च ततो देवविसर्ज्जनम् । उपचारा इमे ज्ञेयाः षट्त्रिंशत्सुरपूजने ॥" इति एतेषु पञ्च सूपचारकल्पेषु उत्तरोत्तराधिकफलेषु आद्ययोर्नैवेद्यं शेषे देयम् । 'निवेद्यान्ता' इत्यभिधानात् । ताम्बूलयज्ञोपवीता

लङ्कारादियत्किञ्चिद्दानमत्र कल्पयोर्नैवेद्यात्प्रागेव "वस्त्रोत्तरङ्गन्धपूर्व्वम्" इति कथनात् । "श्राद्धे वस्त्रात्प्रागेव" इति स्मृतिदीपिका । छन्दोगाह्निके तु स्नापनोत्तरंवस्त्रालंकारयज्ञोपवीतादीनि दत्त्वा गन्धपुष्पधूपदीमनैवेद्यानि दद्यादित्याहुः श्रीदत्तोपाध्यायाः । एते चोपचारकल्पाः काम्यपूजायां यथा विभवमादेयाः । तत्रापि प्रथमः कल्पो नियतः । सोपि पाद्यादिस्नानीयान्तन्दत्त्वैव विधेय इति सामा न्यपूजाप्रयोगे श्रीदत्तोपाध्यायाः। नित्यायान्तु पूजायां सोपि न नियतः किन्तु पञ्चोपचारेष्वपि याव देव लभ्यन्तावतैव सा निर्वाह्या नित्यत्वात् । गौडास्तु स्मृतिः—" गन्धम्पुष्पन्तथा धूपन्दीपन्नैवेद्यपञ्च मम् । प्रतिमादिषु पूजायामवश्यं कल्पयेद्बुधः ॥ जले तु पुष्पमात्रेण जलैर्वा प्रतिपूजयेत् ।" तुरप्यर्थे भिन्नक्रमः पुष्पमात्रेणापीत्यर्थः इत्यधिकमाहुः । अत्र च षोडशोपचारपंचोपचारपूजयोः प्रसिद्धत्वात्त दीयद्रव्याणि विविच्यन्ते, तत्रासनं—कुशसूत्रादिनिर्मितपुष्पौघरचितंयज्ञियदारुमयञ्चन्दनोद्भवंवाल्कलं कोशजंफालंफलनिर्मितं रोमजंकंबलं रङ्कुचर्ममयं कुशमयम् । आयसकांस्यसीसकभिन्नतैजसद्रव्यमयं शिलामयं रत्नमयं मणिमयंवायथालाभङ्ग्राह्यम्।कालिकापुराणेसप्तषष्टितमेध्याये—'पौष्पम्पुष्पौघरचि तङ्कुशसूत्रादिसंयुतम् । अतिप्रीतिकरन्देव्या ममाप्यन्यस्य भैरव । यज्ञदारुसमुद्भूतमासनम्मसृणं शुभम्।

नोच्छ्रायन्नातिविस्तीर्णमासनंविनियोजयेत्॥वाल्कलङ्कौशजम्फालंवास्त्रमेतत्त्रयं स्मृतम्। रोमजङ्कम्बलञ्चै व तदनेन चतुष्टयम् ॥ वास्त्रेषु कंबलं श्रेष्ठमासनं देवतुष्टये । राङ्कवञ्चार्म्मणं श्रेष्ठं दारवञ्चन्दनोद्भवम् ॥ यच्चासनं कुशमयन्तदासनमनुत्तमम् । सर्व्वेषां तैजसानाञ्च आसनञ्ज्येष्ठमुच्यते।आयसं वर्ज्जयित्वा तु कांस्यं सीसकमेव च । शिलामयम्मणिमयन्तथारत्नमयम्मतम्।आसनन्देवताभ्यस्तु भुक्त्यै मुक्त्यै समु त्सृजेत् ।"इत्यादिनोक्तत्वात् । स्वागतन्तु 'स्वागतन्ते'इति स्वागतमस्तु इति वा शब्दोच्चारणरूपम्। पाद्यं पादप्रक्षालनार्थजलम्। अर्घ्यम् रक्तचन्दनकुङ्कुमान्यतरद्बिल्वपत्राक्षतपुष्पदधिदूर्वातिलकुशयुत ञ्जलम्। "रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्व्वाकुशैस्तिलैः । सामान्यः सर्व्वदेवानामर्घोयम्परिकीर्तितः । अभावे दधिदूर्वादेर्म्मानसंवाप्रकल्पयेत् ॥" इत्यर्घप्रकरणे देवीपुराणात् । रक्तं कुङ्कुमं रक्तचन्दनं वा। इदन्तु सति सम्भवे असति तु जलन्नियतमेवेति चिन्तामणिः । अत्र पुष्पतिलयोर्बहुत्वं विवक्षितम्।अत्र गौडनिबन्धे–इदमर्घ्यमिति छन्दोगानाम् एषोर्घ इत्यन्येषामित्याह । आचमनीयं शुद्धजलम् । आ गमे तु गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वाअर्घद्रव्याणि । दूर्वाब्जविष्णुक्रांताः पाद्यद्रव्याणि । जाती लवङ्गकङ्कोलान्याचमनीयद्रव्याणि । शुद्धाभिरद्भिः पुनराचमनीयमित्युक्तमित्याचारचिन्तामणिः

मधुपर्कः दधिघृतजलमधुसितासमूहः कांस्यपात्रस्थः कांस्यपात्रेणपिहितः " दधिसर्प्पिर्ज्जलङ्क्षौद्रं सितैताभिश्च पञ्चभिः । प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये ॥ जलं तु सर्व्वतः स्वल्पं सितादधिघृतं समम् । सर्व्वेषामधिकं क्षौद्रम्मधुपर्के प्रयोजयेत् ॥ " इति कालिकापुराणात् । गौडनिबन्धे पाद्यादि दानस्थानमाह–" श्रीमूर्तौ तु शिरस्यर्घन्दद्यात्पाद्यञ्च पादयोः । मुखे चाचमनीयन्त्रिर्म्मधुपर्कञ्च तत्र हि ॥" इति । स्नानन्तच्च "स्नानीयद्रव्यैर्युगपत् सकलाङ्गसंयोगः" इति स्मृतिकौमुदी । तानि च घृततैलदधिक्षीरेक्षुरसजलमधुप्रभृतीनि । भविष्यपुराणे–"घृततैलदधिक्षीरैरिक्षोश्चैव रसेन तु । नीरेण मधुना स्नानन्तस्य स्नानमिहोदितम् । " इत्युक्तत्वात् तत्र स्नाने घृतादि अष्टोत्तरशतपलपरिमितं महास्नाने सहस्रद्वयपलपरिमितन्देयम् " देवानाम्प्रतिमा यत्र घृताभ्यङ्गक्षमाभवेत् । पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिः ॥ अष्टोत्तरपलशतं स्नाने देयञ्च सर्वदा । द्वे सहस्रे पलानाञ्च महास्नाने च सङ्ख्यया । दातव्यं येन सर्व्वासु दिक्षु निर्य्याति तद्घृतम् ॥ " इति ब्रह्मपुराणेभिधानात् । अत्र घृतप्रतिमे उपलक्षणे दुग्धादावपि लिङ्गेपि चास्या एव व्यवस्थायाः सत्त्वात् । स्नानं शतपलेनैवेति लिङ्गपुराणन्तु लिङ्गस्नपनविषयम्बोद्धव्यम् " पञ्चविंशपलं लिङ्गे अभ्यङ्गङ्कारयेदथ ।

शिवस्य सर्पिषा स्नानम्प्रोक्तम्पलशतेन तु ॥ तावता मधुना चैव दध्ना चैव ततः परम्। तावतैव हि क्षीरेण पञ्चगव्येन वा पुनः ॥ " इति कालिकापुराणेभिधानात् । तत्र घृताभ्यङ्गघृतस्नानानन्तरं यवगोधूमचूर्णैर्जटामांस्यादिगन्धद्रव्यचूर्णयुक्तवटपिप्पलवल्कलचूर्णादिभिर्वा उद्वर्त्तनङ्कृत्वा सुखोष्णजलेन क्षालनङ्कर्त्तव्यं दुग्धादिस्नानानन्तरमपि जलक्षालनं कर्तव्यम्। "घृताभ्यङ्गे घृतस्नाने लिङ्गं यत्नाद्विरुक्षयेत् । यवगोधूमजैश्चूर्णैः कषायैर्गन्धयोजितैः। सुखोष्णेनाम्बुना वापि स्नापयेत्तदनंतरम् ॥ " इति भविष्यपुराणीयात् । लिङ्गमित्युपलक्षणं प्रतिमादेरपि । नरसिंहपुराणे—"यवगोधूमजैश्चूर्णैरुद्वर्त्योष्णेन वारिणा । प्रक्षाल्यदेवदेवेशं वारुणंलोकमाप्नुयात्॥" इत्यभिधानात् । ततो ब्रह्मणो विष्णोश्च स्नानघृतादि ब्राह्मणेभ्यो दातव्यं शिवस्याग्नौ अन्यदेवानान्दीनेभ्यो दातव्यम् "ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवञ्च प्रदीयते । रुद्राङ्गलग्नमग्नौ च दहेत्सर्व्वञ्च तत्क्षणात् । शिष्टेभ्यस्त्वथदेवेभ्यो यत्तद्दीनेषु निःक्षिपेत् ॥ " इति ब्रह्मपुराणात् । देवेभ्य इत्यत्र देव्यश्च देवाश्चेति पुमान् स्त्रियेत्येकशेषाद्देवीभ्य इत्यपि ज्ञेयम्—वसनम् मृदु विकेशन्नवन्दृढं सूक्ष्ममपरिधानशयनासनादिभिर्मनुष्यासम्पृक्तं नीलरक्तभिन्नं विष्णवे । गौडनिबन्धे—"

यो दद्यात्स तु पापैः प्रलिप्यते ॥ " अत्रापवादः 'आविके पट्टवस्त्रे च नीलीरागो न दुष्यति ।' इति । आभरणम्—मणिस्वर्णादिनिर्मितम् । षोडशोपचारान्तरे उपवीतम्—पट्टसूत्रादिनिर्म्मितं शुक्लम्पीतं वा दातव्यमिति छन्दोगाह्निकम् । गन्धः—चन्दनागुरुकर्पूरकुङ्कुमान्यतमपङ्कम् । तिलकरूपम् । तच्च गन्ध पदेनोल्लिख्यैव देयमित्यग्रे स्फुटीभविष्यति । सर्वत्रानुलेपनानन्तरन्तालवृन्तवीजनम्पुण्यप्रदमिति छन्दोगाह्निकम् । अथ पुष्पाणि—अरण्यसम्भवानि गिरिसम्भवानि स्ववाटिकासम्भवानि स्वामिना वाटिकारक्षकेण वा स्वेच्छया दत्तपरवाटिकासम्भवानि च नित्यपूजायाञ्चौर्य्येणाप्यानीतानि च निषिद्धवर्ज्जं सुरभीणि निश्छिद्राणि प्रोक्षितानि सामान्यतो विहितानि । यत्तु "परारोपितवृक्षेभ्यः पुष्पाण्याहृत्य योर्च्चयेत् । अविज्ञाप्य च तस्यैव तस्य तन्निष्फलं भवेत् ॥ " तद्द्विजेतरपरम् ' द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् । " इति याज्ञवल्क्यात् ' देवतार्थन्तु कुसुममस्तेयम्मनुरब्रवीत् ' इतिवचनाच्च " गोग्न्यर्थन्तृणमेधांसि यज्ञार्थे वीरुद्वनस्पतीनाम्पुष्पाणि स्ववदाददीत फलानि च परिवृंहितानाम् " इति गौतमवचनाच्च विशेषो ज्ञेय इत्याहुः ॥ विशेषतस्तुऽजातीशमीकुब्जककुशकरवीरनागपुन्नागमल्लिकाअशोकचम्पकरक्तोत्पलनीलोत्पलबकुलपद्मपुष्पाणि सर्वदे

वानां विहितानि । स्वयमुत्पादितपुष्पं मुक्तपुष्पाद्ग्रथितपुष्पञ्चाधिकफलम् । ग्रथितम्मालारूपेण गुच्छरूपेण वा । उग्रगन्धीनिविशेषविहितभिन्ननिर्गन्धीनि सकेशसकीटकीटविद्धस्वयम्पतितस्वयम विकसितोपहतशीर्णशुष्काधोवस्त्रधृतमस्तकोपरिधृतवामहस्तधृतशूद्रानीताऽविकसितानि कृताहःस्नानेन पूजाकर्त्रा स्वयन्त्रोटितानि याचितानि सच्छिद्राणि च निषिद्धानि । अशुच्युत्पादितानि च निषिद्धानीति चिन्तामणिः । कलिकापि सर्वेषान्निषिद्धा मुकुलैर्नार्च्चयेद्देवमपक्वान्ननिवेदयेत् इति भविष्यपुराणात् । अभिवादनकालेभिवाद्याभिवादककरस्थितानि निषिद्धानीति केचित । अग्रभागत्यागात्प्रोक्षणाच्च तानि शुद्धानीत्यपरे । क्रयक्रीतन्तु निष्फलमिति तु प्रवादः महाजनैरनादृतत्वादिति । तुलस्यां बिल्वपत्रे जलपुष्पेषु च पर्य्युषितत्वदोषो नेति तु प्रवाद इति च श्रीदत्तादयः । पर्य्युषितेष्वपि मालाकारगृहस्थितेषु न दोष इति शैवागमः । यावच्च पुष्पन्निर्म्माल्यतान्न याति तावदेव देवताङ्गेभ्य उत्तारणीयम् । निर्म्माल्यता च जात्या प्रहरेण करवीरस्याहोरात्रेण इतरपुष्पाणाङ्गन्धापगमे भवति "प्रहरं तिष्ठते जाती करवीर्महर्न्निशम् ।" इत्यादिश्रवणात् । शारदायाम्—"मलिनम्भूमिसंस्पृष्टङ्कृमिकेशादिदूषितम् । अङ्गस्पृष्टं समाघ्रातन्त्यजेत्पर्य्युषितम्बुधः ॥" पद्मपुराणे—"भूमि

स्पृष्टन्न गृह्णीयाच्छेफालीवकुलम्बिना ॥" गौडास्तु योगिनीतन्त्रे–"बिल्वपत्रञ्च माघ्यञ्च तमालामल कीदलम्। कह्लारन्तुलसीं चैव पद्मञ्च मुनिपुष्पकम्। एतत्पर्य्युषितन्न स्याद्यच्चान्यत्कलिकात्मकम् ॥" भविष्ये पद्मानि सितरक्तानि कुसुमान्युत्पलानि च। एषाम्पर्य्युषिताशङ्का कार्य्या पञ्चदिनोर्ध्वतः ॥ इति लिखन्ति। निषिद्धान्यपि मालया देयानि देवार्प्पितवाटिकासम्भवानि वृक्षमुत्पाद्य वृक्षशाखाम्भ ङ्क्त्वा चावचितानि च निषिद्धानीति ज्ञेयम्। पत्राणि चारण्यसम्भवानि कीटादूषितानि निश्छिद्राणि निष्केशानि अपर्य्युषितानि अनुपहतानि सर्वेषान्देवानां विहितानि बिल्वपत्राणि च सर्व्वेषां विहिता नि पुष्पेषु ये ये निषेधा उक्तास्ते पत्रेष्वप्यनुसन्धेयाः। विहितपुष्पपत्राभावे विहितनिषिद्धानि तद भावे निषिद्धवर्ज्जमन्यान्यपि गन्धवर्णयुतानि तदभावे विहितपुष्पवृक्षपत्राणि देयानि हरिभक्तिदीपि कायान्तु–पुष्पाद्यभावे जलेनापि नित्यपूजा निर्वाह्येति विशेष उक्तः।अत्र श्रीदत्तोपाध्यायाः–"पुष्पैरर ण्यसम्भूतैः पत्रैर्व्वा गिरिसम्भवैः।" इति वाक्ये पूजास्वरूपसिद्धौ विकल्पश्रवणेपि तत्तद्वचनकथित तत्तत्फलार्थितया समुच्चयोपि। पुष्पाभावे पत्रविधेर्न्नेति केचित्तन्न तत्र तत्र पत्रपदस्य पुष्पतुल्यतया विहितपत्रेतरपत्रपरत्वात्। एवञ्च मुहुर्म्मुहुः पुष्पदानन्नानापुष्पजातिसमुच्चयो नानापत्रजातिसमु

च्चयश्च समर्थितः फलविशेषार्थत्वात् । बहुवचनञ्च न कपिञ्जलन्यायात् त्रित्वपरं प्रतिमा च्छादनादेर्व्विहितत्वात् । त्रित्वपरत्वेप्यधिकफलार्थितयाधिकदानमपि । तस्मात्पूजास्वरूपसि द्धिरेकपुष्पजात्यापि एकपत्रजात्यापि अनावृत्त्यापि भवतीति फलार्थितया समुच्चयोपि पुष्पैरेतैर्य्यथालाभम् एतेषाञ्च यथालाभैः पत्रैश्चेत्याद्युक्तेर्व्वा समुच्चयः इत्युक्तवन्तः । पुष्पाद्य र्प्पणे गौडाः ज्ञानमालायाम्—"पुष्पंवा यदि वा पत्रम्फलन्नेष्टमधोमुखम् पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नन्तथार्प्पणम्॥" इति पठन्ति । धूपः सघृतगुग्गुलुः स च पुष्पमदत्त्वा न देयः "अदत्त्वा गन्ध माल्यानि यो मे धूपम्प्रयच्छति । मृतोसौ जायते भूमौ यातुधानो न संशयः ॥ इति वराहपुराणात् । माल्यपदमग्रथितपुष्पाणामप्युपलक्षणम् । धूपदीपनैवेद्यदाने गौडनिबन्धे कालिकापुराणम् "नैवेद्यन्द क्षिणे वामे पुरतो न च पृष्ठतः । दीपन्दक्षिणतो दद्यात्पुरतो न च वामतः ॥ वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । निवेदयेत्पुरोभागे गन्धम्पुष्पञ्च भूषणम्॥प्रतिमादिषु यद्योग्यञ्चात्रे दातुञ्च तत्तनौ । दद्यादयोग्यम्पुरतो नैवेद्यम्भोजनादिकम् ॥ " इति तथा गन्धपुष्पधूपाश्च घ्रात्वा देवेभ्यो न देया कालिकापुराणे—"गन्धम्पुष्पञ्च धूपञ्च उपचारांस्तथापरान् । जिघ्रन्निवेद्य देवेभ्यो नरो नरकमाप्नु

यात्॥" तथा भूम्यादौ संस्थाप्य धूपन्न दद्यात् "न भूमौ वितरेद्धूपन्नासने न घटे तथा। यथातथा धारगतं कृत्वा तंविनिवेदयेत्॥" इति कालिकापुराणात्। दीपः स च "नेत्राह्लादकरः स्वर्च्चिः क्रूरता पविवर्ज्जितः। सुशिखः शब्दरहितो निर्द्धूमो नातिह्रस्वकः॥ लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात्। न स दीप इति ख्यातो व्योमवह्निस्तु स स्मृतः॥" इति कालिकापुराणोक्तलक्षणलक्षितः कार्य्यः सर्व्वदेवानान्दीपे घृतं शिवभिन्नदेवानान्तैलञ्च विहितं घृतन्तैलञ्च मिश्रीकृत्य दीपे न देयं "न मिश्रीकृत्य दद्यात्तु दीपे स्नेहघृतादिकान्। दत्त्वा मिश्रीकृतं स्नेहन्तामिस्रन्नरकं व्रजेत्॥" इति कालिकापुराणात्। वर्तिका तु तत्र शुद्धपट्टकौशेयकार्प्पाससूत्रनववस्त्रतद्दशाभवा कार्य्येति शूलपाणिः। न तु जीर्णमलिनोपयुक्तवस्त्रादिभवा "शाणंबादरकंवास्त्रञ्जीर्णम्मलिनमेव वा। उपयुक्तन्तु नो दद्याद्वर्त्तिकार्थङ्कदाचन॥" इतिकालिकापुराणादितिबोध्यम्। सूर्य्यदीपाधिकारे भविष्यपुराणे–तांश्च दत्त्वा न हिंसेत न च तैलविवर्ज्जितान्। कुर्व्वीत दीपहर्त्ता च मूषिकोन्धश्च जायते॥" इति वचनात्। "नैव निर्व्वापयेद्दीपन्देवार्थमुपकल्पितम्। दीपहर्त्ता भवेदन्धः काणो निर्व्वापको भवेत्॥" इति कालिकापुराणाच्च देवाय कल्पितो दीपो न निर्व्वापणीयः। भूमौ दीपो न धार्य्यः "वृक्षे दीपः प्रदातव्यो न

तु भूमौ कदाचन। सर्व्वंसहा वसुमती सहते न त्विदं द्वयम्। अकार्य्यपादघातञ्च दीपतापन्तथैवच॥"
इति कालिकापुराणात् नैवेद्यानि तु भक्ष्यभोज्यकन्दमूलफलान्नपानकादीनि सर्व्वत्र विहितानि। फल
न्तु अपक्कं क्वथितं यत्नपक्कं विद्धं कालापक्कञ्चन निवेदनीयम् "मुकुलैर्नार्च्चयेद्देवमपक्वन्न निवेदयेत्। फल
ङ्क्वथितविद्धञ्च कालापक्कमपि त्यजेत्॥" इति देवीपुराणात्। अन्यत्र "यत्नपक्कमपि त्यजेत्" इति दर्शना
च्च। क्वथितं जलमध्येग्निपक्कं तत्र जलमध्ये इत्यंशः क्वथितपदार्थे विवक्षितः यत्नपक्कमपित्यजेदित्यन्यत्र
दर्शनात्। तत्र यत्नोऽग्निधूपरूपः सङ्ख्यापरिमाणनिर्णयनिबन्धे–"यत्नपक्कमपि ग्राह्यङ्कदलीफलमु
त्तमम्।" अत्र यत्नो धूमोपरिस्थापनगर्त्तादिनिःक्षेपवासकपत्राद्याच्छादनरूपः। उत्तमपदेन रसोत्क
र्षाभिधानात् हेतुगर्भञ्चतद्विशेषणमिति। पनसलकुचादिकमपि तादृशंग्राह्यमित्यायाति। कालापक्कंस
मुचितपाकसमयपक्कव्यतिरिक्तम्। विद्धं कण्टककृम्यादिना। व्यञ्जनस्याग्निपक्कतानियमात्तद्भिन्नतया
ग्निपक्कस्य कालापक्कस्य वा निषेधो ज्ञेयः" तेन कदलीपनसपटोलादेर्व्यञ्जनरूपस्य न निषेधः।
आम्रचूर्णतिन्तिडचादेरपि व्यञ्जनोपकरणत्वादपक्कस्याग्निपक्कस्य च न निषेधः। मातृपूजायामका
लपक्कमपि देयमिति छन्दोगाह्निकम्। सिद्धान्नन्तु वैश्वदेवानन्तरपूजापक्षे एव देयमित्येके। अकृतेपि

वैश्वदेवे वैश्वदेवार्थमग्रभागमुद्धृत्य शेषेणान्नेन नैवेद्यदानमविरुद्धम् । " अकृते वैश्वदेवे तु भिक्षौ च गृहमागते। वैश्वदेवार्थमुद्धृत्य भिक्षान्दत्त्वा विसर्ज्जयेत्" इति नरसिंहपुराणीयोद्धरणवदित्यपरे । न च वैश्वदेवं विना पक्वान्नस्यासंस्कृतत्वान्न नैवेद्यार्हत्वमिति वाच्यम् । " अहरहः स्वाहा कुर्य्यादाकाष्ठात " इति श्रुतेः । " सायम्प्रातर्व्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च । अनश्नतापि सततमन्यथा किल्बिषी भवेत् " इति कात्यायनस्मृतेश्च । वैश्वदेवस्य पुरुषार्थत्वेन पाकसंस्कारकत्वाभावात् । न च पाकाग्रमुद्धृत्य जुहुयात् " इति प्रयोगदर्शकविष्णुसूत्रादुद्धरणोत्तरं होमस्यैव विधानात्तदा तेन नैवेद्यदानमयुक्तमितिवाच्यम् । विष्णुसूत्रस्यकठशाखीयत्वादन्यशाखीयानामुद्धरणस्यार्थलभ्यत्वात । वस्तुतः क्वाश्रवणेन होमस्योद्धरणोत्तरकालिकत्वेपि अव्यवहिततदुत्तरकालिकत्वे मानाभावात्कठशाखीयैरपि उद्धृत्य सिद्धान्नन्निवेदनीयमेव भिक्षुभिक्षादानवदित्याह स्मृतिदीपिकाकारः । पाकासत्त्वे तु आमान्नफलादिभिरेव नैवेद्यदानङ्कार्य्यम् । किञ्च " वैश्वदेवनिषेधो यज्ञार्थन्निवर्त्तते " इति गोभिलदर्शनाद्विष्ण्वर्थकपाकान्तरेण सर्व्वेषान्नैवेद्यदानमविरुद्धमिति बोध्यम् । यज्ञो विष्णुः । शूद्रस्य च नैवेद्यंवैश्वदेवश्चामान्नेनैव। "आमं शूद्रस्य पक्वमुच्छिष्टमुच्यते" इति निषेधात । मांसं शिवेतरेषु दातव्यं तच्च पक्वं दाक्षि

णात्यनिबन्धे—नैवेद्यादौपार्थक्याभावे यथांशत इति वदेत् सुवर्णमययज्ञोपवीतेप्येवमाचार इति विशेष उक्तः सर्वत्र नैवेद्यदानानन्तरमादर्शदर्शनम्पुण्यप्रदमिति श्रीदत्तः। एतच्च नैवेद्यं सूर्य्याय दत्तं मगेभ्यः शिवाय दत्तम्भस्माङ्गेभ्यःदुर्गायै दत्तं स्त्रीभ्यो विष्णवे दत्तं सात्त्वतेभ्यो ब्राह्मणेभ्यो वा दद्यात्। "विप्रेभ्यस्त्वथ तद्देयम्ब्रह्मणे यन्निवेदितम्। स्त्रीभ्योथ देयम्मातृभ्यो यत्किञ्चिद्विनिवेदितम्। भूतप्रेत पिशाचेभ्योयत्तद्दीनेषु निःक्षिपेत्"। एतद्वचनस्य स्नानीयदानप्रकरणोक्तत्वेपि विनिवेदितमित्युपसंहारात् नैवेद्यप्रतिपादनस्याप्यभिधायकत्वात्। वन्दनं स्तुतिः प्रणामश्च। स्मृतिदीपिकाकारास्तु—चन्दनमिति पठित्वा चन्दनं हस्ताद्यंगेषु लेपनं तदेव चाष्टादशोपचारेष्वनुपलेपनपदार्थः। गन्धः सुरभिद्रव्येण तिलकरूपः स च गन्धपदेनोल्लिख्यैव देयः। अनुलेपनपदेन दानंविशेषादर्शनमूलकम् अतएवैष गन्धःशिवाय नमः इत्येव प्रयोगाल्लिँखन्ति शिष्टाः। गन्धानन्तरमक्षतदाने मानन्तु पारणाद्यर्थपूजायांगन्धाक्षतकरणकत्वदर्शनमिति वामदेवोपाध्याया आहुः। तदयम्प्रकरणार्थः पूजा विविधा—तत्र गंधपुष्पधूपदीपनैवेद्येति पञ्चोपचारा एका। पाद्यार्घ्याचमनीयमधुपर्काचमनीयगंधादिपञ्चकेति दशोपचारा द्वितीया। अत्र मधुपर्कदानात्पूर्वं स्नानीयन्देयमिति गौडाः।

आसनस्वागतपाद्यार्घ्याचमनीयमधुपर्काचमनस्नानवसनाभरणगंधादिपञ्चकवंदनेति षोडशोपचारा तृतीया । स्मृतिदीपिकायांतु—चंदनमिति पठित्वा चंदनं हस्ताद्यंगेषु लेपनङ्गन्धस्तु ललाटे तिलकक रूप इत्याह । आसनावाहनार्घ्यपाद्याचमनस्नानवस्त्रोपवीतभूषणगन्धादिपञ्चकमाल्यानुलेपननमस्कार विसर्ज्जनेति अष्टादशोपचारा चतुर्थी । आसनाभ्यञ्जनोद्वर्त्तननिरुक्षणसंमार्ज्जनसर्पिरादिस्नानावा हनपाद्यार्घ्याचमनीयस्नानीयमधुपर्कपुनराचमनीयवस्त्रयज्ञोपवीतालंकारगंधादिचतुष्टयताम्बूलनैवेद्य पुष्पमालानुलेपनशय्याचामरव्यजनादर्शदर्शननमस्कारनर्त्तनगीतवाद्यदानस्तुतिहोमप्रदक्षिणादंतका ष्ठदानदेवविसर्ज्जनेति षट्त्रिंशदुपचारा पञ्चमी । एते चोपचारा उत्तरोत्तराधिकफलाः । तत्राद्ययोर्नैवेद्यं शेषे देयमनयोः कल्पयोः फलदर्शनात्ताम्बूलयज्ञोपवीतालंकारादिदानन्नैवेद्यात्प्रागेव श्राद्धे वस्त्रात्प्रा गेवेतिस्मृतिदीपिका । छन्दोगाह्निके तु—स्नपयित्वा यथालाभंवस्त्रालङ्कारादीनि यज्ञोपवीतादीनि च दत्त्वा गंधपुष्पधूपदीपनैवेद्यादीनि दद्यादिति लेखात्गन्धात्पूर्व्वं स्नानोत्तरमेतेषां दानमायाति । एते कल्पाः काम्यपूजायांयथाविभवमादेयाः । तत्रापि प्रथमः कल्पोनियतः नित्यायान्तुपूजायां सोपि न नियतः किन्तु पञ्चसूपचोरेष्वपि यावदेव लभ्यन्तावतैव सानिर्व्वाह्या नित्यत्वात् । प्रतिमादिषु

पूजायांगन्धपुष्पधूपदीपनैवेद्यान्यवश्यंदेयानि । जले तु पुष्पमात्रेण जलैर्व्वापि पूजा सिद्ध्यतीति गौडाः । अथषोडशोपचारद्रव्याणि तत्रासनं कुशसूत्रादिनिर्म्मितम्पुष्पौघरचितं यज्ञदारुमयं चंदनोद्भवं वाल्कलं कोशजं फलभवं रोमजङ्कम्बलं रङ्कुचर्म्ममयं कुशमयं आयसकांस्यसीसकभिन्नतैजसद्रव्यमयं शिलामयं रत्नमयं मणिमयञ्च देयम् । स्वागतन्तु स्वागतमस्तु स्वागतन्ते इत्यादिना कार्य्यम् पाद्यं पादप्रक्षालनार्थमुदकम् । अर्घ्यम् रक्तचंदनकुङ्कुमान्यतरत् बिल्वपत्राक्षतबहुपुष्पदधिदूर्व्वाबहुतिलकुशयुतजलम् । एषां मध्ये यदभावस्तस्य जले मनसा कल्पना कार्य्या । आचमनीयम् शुद्धजलम् । मधुपर्कः दधिघृतजलमधुसितासमूहः कांस्यपात्रस्थः तत्र जलं सर्व्वतः स्वल्पं सितादधिघृतं समं देयम्।स्नानङ्घृततैलदधिक्षीरेक्षुरसजलमधुप्रभृत्यन्यतमद्रव्यैरष्टोत्तरशतपलपरिमितैर्युगपत्सकलाङ्गसम्बन्धः । महास्नानन्तु सहस्रद्वयपलपरिमितैरुक्तद्रव्यैर्भवति । अत्र घृतस्नानानन्तरं यवगोधूमचूर्णैर्ज्जटामांस्यादिगन्धद्रव्यचूर्णयुक्तवटपिप्पलवल्कलचूर्णादिभिर्व्वा उद्वर्त्तनङ्कृत्वा सुखोष्णजलेन क्षालनङ्कर्त्तव्यम् । दुग्धादिस्नानानन्तरमपि जलक्षालनङ्कर्त्तव्यम् । ततो ब्रह्मणो विष्णोश्च स्नानघृतादि ब्राह्मणेभ्यो दातव्यम् शिवस्याग्नौ अन्यदेवानान्देवीनाञ्चदीनेभ्योदेयम् । वसनम् मृदुविके

शम् नवन्दृढम् सूक्ष्मम् परिधानशयनासनादिभिर्म्मनुष्यासम्पृक्तं नीलरक्तभिन्नम् । गौडमते पट्टवस्त्रं नीलं रक्तञ्च देयम् उपवीतं पट्टसूत्रादिनिर्म्मितं शुक्लम्पीतं वा दातव्यमिति छन्दोगाह्निकम् । गन्धः चन्दनागुरुकर्प्पूरकुङ्कुमान्यतमपङ्कन्तिलकरूपः स च एष गन्ध इत्युच्चार्य्य देयः सोऽपि देवतापुरो भाग एव न पृष्ठतः । गन्धदानानन्तरन्तालवृन्तैश्चामरैश्च वीजनमतिप्रशस्तम् । पुष्पाणि अरण्यसम्भवानि गिरिसम्भवानि स्ववाटिकासम्भवानि स्वामिना वाटिकारक्षकेण वा स्वेच्छया दत्तपरवाटिकासम्भवान्यपि गौडमते परवाटिकासम्भवान्यपि स्ववद्द्विजैरादेयानीति । नित्यपूजायाञ्चौर्य्येणानीतान्यपि निषिद्धवर्ज्जम् सुरभीणि निश्छिद्राणि प्रोक्षितानि सामान्यतो विहितानि । विशेषतस्तुजातीशमी–कुब्जक–कुश–करवीर–नागपुन्नाग–मल्लिकाऽशोक–चम्पक–रक्तोत्पल–नीलोत्पल–बकुलपद्मपुष्पाणि सर्वदेवानां विहितानि स्वयमुत्पादितपुष्पं मुक्तपुष्पाद्ग्रथितपुष्पञ्चाधिकफलम् ।उग्रगन्धीनि विशेषविहितभिन्ननिर्गन्धीनि सकेशसकीट–कीटविद्ध–स्वयम्पतित–स्वयमविकसितोपहतशीर्ण–शुष्काधोवस्त्रधृत–नीली–कपित्थाद्यपवित्राणि अन्तर्ज्जलक्षालितपर्य्युषिताकालभवदेवोपरिधृत-मस्तकोपरिधृत–वामहस्तधृत–शूद्रानीतानि–कृताहःस्नानेन पूजाकर्त्रा स्वयं त्रोटितानि याचितानि सच्छि

द्राणि च निषिद्धानि अशुच्युत्पादितानि च निषिद्धानीति शूलपाणिः । कलिका तु सर्वेषान्नि षिद्धा अभिवादनकालेभिवाद्याभिवादककरस्थितानि निषिद्धानीति केचित् । अग्रभागत्यागात्प्रोक्ष णाच्च तानि शुद्धानीत्यपरे । क्रयक्रीतन्तु निष्फलमिति तु प्रवाद एव शिष्टैरनादृतत्वादिति । तुलस्यां बिल्वपत्रे जलपुष्पेषु च पर्य्युषितत्वदोषो नेत्यपि प्रवाद एवेति च श्रीदत्तोपाध्यायाः । पर्य्युषितेष्वपि मालाकारगृहस्थितेषु न दोष इति शैवागमः । यावच्च पुष्पं निर्माल्यतान्न याति तावदेव देवताङ्गेभ्य उ त्तारणीयम् । निर्माल्यता तु जात्याः प्रहरेण करवीरस्याहोरात्रेण इतरपुष्पाणां गंधापगमे भवति शेफा लीबकुलातिरिक्तानिभूमिस्पृष्टान्यपि निषिद्धानि । गौडनिबंधे–बिल्वपत्रतमालामलकीदरकल्हारतुल सीपद्मपत्रागस्त्यानां कलिकात्मकानां च पुष्पाणां पर्य्युषित्वदोषाभावः।सितरक्तपद्मानामुत्पलानाञ्च पञ्चमदिनादूर्द्धं पर्य्युषितत्वशंका कार्येत्युक्तम्।निषिद्धान्यपि मालया देयानि । देवार्पितवाटिकासम्भ वानि वृक्षमुत्पाटय वृक्षशाखाम्भंक्त्वा वाऽवचितानि च निषिद्धानि पत्राणिचारण्यसम्भवानि–कीटादू षितानि निश्छिद्राणि–निष्केशानि–अपर्य्युषितानि–अनुपहतानि–सामान्यतो विहितानि विशे षतो बिल्वपत्राणि सर्व्वेषां विहितानि पुष्पेषु ये ये निषेधा उक्तास्ते पत्रेष्वप्यनुसंधेयाः । विहितपत्राभावे

विहितनिषिद्धानि तदभावे निषिद्धवर्ज्जमन्यान्यपि तदभावे विहितपुष्पवृक्षपत्राणि देयानि हरिभक्तिदीपिकायान्तु–पुष्पाद्यभावे जलेनापि नित्यपूजा निर्व्वाह्येति विशेष उक्तः। धूपः सघृतगुग्गुलुःतञ्च भूम्यतिरिक्ताधारेदेवतावामभागेऽग्रे वा दद्यान्न तु दक्षिणे न च गन्धपुष्पमदत्त्वा दद्यात्। सर्वदेवानान्दीपे घृतं शिवभिन्नदेवानान्तैलञ्च विहितम्। वर्तिका तु तत्र शुद्धपट्टकौशेयकार्प्पासंसूत्रनववस्त्रतद्दशाभवा कार्य्येति शूलपाणिः। दीपन्तु देवतादक्षिणे पुरतो वा दद्यान्न वामतो न च भूमौ देवेभ्यो दत्तदीपो न निर्व्वापणीयः। नैवेद्यानि तु भक्ष्यभोज्यकन्दमूलफलान्नपानकादीनि सर्वत्र विहितानि। फलन्तु अपक्वम् जलमध्येऽग्निपक्वम् क्वथितपदवाच्यम् धूमपक्वम् समुचितपाकसमयव्यतिरिक्तसमयपक्वम् कालापक्वपदाभिधेयम् कंटकक्रुम्यादिना विद्धञ्च न देयम्।व्यञ्जनरूपपनसकदलपटोलादीनि अग्निपक्वानि कालापक्वानि च दद्यात्। एवमाम्रचूर्णतिन्तिडचादेरपि व्यञ्जनोपकरणत्वादपक्वत्वमग्निपक्वत्वंवा तत्र न दोषायेति बोध्यम्। सिद्धान्नन्तु वैश्वदेवानंतरपूजापक्षे देयम्। अकृते वैश्वदेवे पूजेति पक्षे तु वैश्वदेवार्थमग्रभागमुद्धृत्य शेषमन्नन्देवेभ्यो निवेदनीयमित्यपरे। असति पाके फलादिष्वप्यसत्सु आममन्नमपि निवेदनीयम्। शूद्रेण तु पक्वमन्नन्नैव देयम्। मांसन्तु शिवेतरदेवेभ्यो दातव्यं तदपि पक्वमेव। एतच्च नै

वेद्यं सूर्य्याय दत्तम्मगेभ्यः,शिवाय दत्तम्भस्माङ्गेभ्यः,दुर्गायै दत्तं स्त्रीभ्यो,विष्णवे दत्तं सात्त्वतेभ्यो ब्राह्मणेभ्यो वा दद्यात् । इतरदेवताभ्यो निवेदितं दीनेभ्यो दद्यात् । दाक्षिणात्यनिबन्धे नैवेद्यादौ पार्थक्याभावे यथांशत इति वदेत् । स्वर्णमययज्ञोपवीतेप्येवमाचार इति विशेषः । सर्व्वत्र नैवेद्यदानानन्तरमादर्शदर्शनम्पुण्यप्रदम् । वन्दनम् स्तुतिः प्रणामश्च । स्मृतिदीपिकाकारमते तु चन्दनमिति पाठः तच्च हस्ताद्यङ्गेषु लेपनम् । गन्धस्तु सुरभिद्रव्येण तिलकरूपः । स च गन्धपदमुल्लिख्यैव देयः । गन्धानन्तरमक्षततिलादिदानमाचारादिति । इति पूजापङ्कजभास्करे उपचारविचारो नामाष्टमः प्रकाशः ॥ ८ ॥

अथ प्रकीर्णकम् ॥ ॥ पूजाकाले सुवर्णरजतकुशत्रयाणि दक्षिणहस्ते धारयेत् । "जपे होमे तथा दाने स्वाध्याये पितृतर्प्पणे । अशून्यन्तु करं कुर्य्यात्सुवर्णरजतैः कुशैः" इति हारीतवचनात् । तत्राप्यनामिकायाम् "अनामिकायान्तद्धार्य्यन्दक्षिणस्य करस्य च" इति हेमधारणप्रकरणस्थदेवीपुराणे हेमधारणस्य तत्र विहितत्वेन तत्समभिव्याहृतानां रजतकुशानां धारणस्यापि तत्रैवौचित्यात् । तर्ज्जन्यां रजतं धार्य्यमिति निर्म्मूलमिति कल्पतरुप्रभृतयः । एवम्पवित्रधारणमपि तत्रैव "सव्यः

सोपग्रहः कार्य्यो दक्षिणः स पवित्रकः" इति कात्यायनेनाभिधानात् । पवित्रलक्षणं छन्दोगपरिशिष्टे–
"अनन्तगर्भिणं साग्रं कौशन्द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥" द्विदलं द्विसं
ख्याकं दलं पत्रम् । अनन्तगर्भिणं तथा च गर्भ, गर्भि, अन्तर्गर्भि च त्यक्त्वाचतुर्थङ्ग्राह्यम् । छान्दस
त्वात्पुल्लिंगनिर्देशः । यत्रकुत्रचित्सन्ध्यावन्दनातिरिक्तेपि कर्मणि इदमेव पवित्रलक्षणम् । पवित्रे
सन्यासिपद्धतिलिखितं वाक्यं पठन्ति "सव्यापसव्यवलितं ब्रह्मग्रन्थिसमन्वितम् । लङ्घयेत्प्रथमं
पर्व द्विपर्वन्नैव लङ्घयेत् ॥" लङ्घयेत्पर्वमेकन्तु इति पाठान्तरमित्याचारचिन्तामणिः ॥ गौडास्तु
"अनामिकाधृतं हेम तर्ज्जन्यां रौप्यमेव च । कनिष्ठायां धृतं खड्गन्तेन पूतो भवेन्नरः ॥" इति याज्ञ
वल्क्यवचनात् "तर्ज्जनी रूप्यसंय्युक्ता हेमयुक्ता त्वनामिका । सैव युक्ता तु दर्भेण कार्य्या विप्रेण
सर्व्वदा ॥" इति विद्याकरधृतवचनाच्च । तर्ज्जन्यामेव रजतं धार्य्यमिति वदन्ति अनन्तर्गर्भिणमित्यादि
पवित्रलक्षणमुक्त्वा अनन्तर्गर्भिणम् अनन्तर्गर्भशून्यम् । तथा च शौनकः–"अनन्तस्तरुणौ यौ तु कुशौ
प्रादेशसम्मितौ । अनखच्छेदिनौ साग्रौ तौ पवित्राभिधेयकौ ॥" एतदभावे कुशपत्रचतुष्टयं त्रयं वा
"चतुर्भिः कुशपत्रैश्च त्रिभिर्द्वाभ्यामथापि वा । पवित्रं कारयेन्नित्यं प्रशस्तं सर्वकर्मसु ॥" इति समु

द्रकरधृतवचनात् । विद्याकरवाजपेयिधृतम् पवित्रन्तु द्विजः कुर्यात्कुशपत्रद्वयेन तु। पत्रत्रयेण वा कार्यं न्नैकपत्रेण कुत्रचित् ॥ इति च लिखन्ति । दक्षिणात्यास्तु शङ्खः—" अनन्तर्गर्भिणं साग्रम् " इतिवचनमुक्त्वा, हारीतः—पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिञ्जुलैः । तत्रैकं न्यूनमुद्दिष्टं वर्णेवर्णे यथाक्रमम् ॥ " स्मृत्यर्थसारे—" सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितन्नवम्।" रत्नावल्याम्—"द्वयोस्तु पर्वणोर्मध्ये पवित्रन्धारयेद्बुधः" । हेमाद्रौ स्कान्दे—" अनामिकाधृता दर्भा ह्येका नामिकयापि वा । द्वाभ्यामनामिकाभ्यान्तु धार्ये दर्भपवित्रके ॥ " पवित्राभावेतु तत्रैव सुमन्तुः—समूहाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे । सव्ये चैव तथात्रीन्वै बिभृयात्सर्वकर्मसु॥ " इत्याहुः । यत्र जलप्रतिमादौ स्थिर एव देवसन्निधिस्तत्रावाहनविसर्ज्जनञ्च विनैव पूजा कार्य्या । प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्ज्जनवर्ज्जमिति बौधायनवचनात् । हरिभक्तिदीपिकायाङ्कणेश्वरमिश्रास्तु शालग्रामशिलायामपि विष्णोरावाहनं विधेयम् । नचावाहनं सान्निध्यार्थं सान्निध्यञ्च स्वतःसिद्धमेव"शालग्रामशिला यत्र तत्र सन्निहितो हरिः" इतिवचनात् । अथ दैशिकसान्निध्यस्य तत्र सिद्धत्वेपि बौद्धसान्निध्यार्थन्तदाचरणमिति तु न वाच्यम् । बौद्धसान्निध्यस्यापि वचनबलादेव सिद्धत्वादिति वाच्यम् । अदृष्टार्थत्वात् । मन्त्रकरणकसान्निध्यबु

द्धेरेव तत्राहृष्टजनकत्वनियमात् । ताहृग्बुद्धेस्तत्करणताया आवाहनं विना सम्भवात् । अत एव पद्म पुराणीयस्नाने विष्णोः पादप्रसूतासीति गङ्गायामपि गङ्गावाहनमाचरन्ति शिष्टाः । अत एव च यस्यापि गृहे सोमस्तेनापि सोमः क्रेतव्य इत्यधिकरणसिद्धान्तः । आरुण्यादिगुणविशिष्टगोक्रीतसोम स्यैवाहृष्टजनकत्वनियमात् देवतासम्मुखीकरणार्थमावाहनमित्यागमिका इत्याहुः । गौडैस्तु–उद्वा सावाहने न स्तः स्थिरायामुद्धवार्चने । अस्थिरायां विकल्पः स्यात्स्थण्डिलेतुभवेद्द्वयमिति विशेष उक्तः । द्वयम् उद्वासावाहने दाक्षिणात्यनिबन्धे पुरुषसूक्तषोडशोपचारपूजाप्रकरणे " ध्यायेदभिमतां विष्णुमूर्त्तिं सम्पूजयेत्ततः । " प्रथमया पुरुषसूक्तर्चा आवाहनम् शालग्रामशिलादावावाह नाभावाहगन्ते पुष्पं देयमिति लिखितम् । आवाहनन्तु आगच्छेति पदानन्तरं सम्बोधनान्तदे वतानाम्नेति छन्दोगाह्निकम् । सम्बोधनान्तदेवतानामानन्तरमागच्छेति पदेन देवतामावा ह्येति वाचस्पतिमिश्रशूलपाण्यादयः । एते चोपचाराः दक्षिणहस्तेनैव देयाः । कर्म्मोपदिश्यते यत्र कर्त्तुरङ्गन्न चोच्यते। दक्षिणस्तत्र विज्ञेयः कर्म्मणाम्पारगः करः॥" इति छन्दोगपरिशिष्टात् घण्टा वादनन्तु वामहस्तेन दक्षिणकरस्यार्घादिनावरुद्धत्वादिति । सव्ये आचमनीयङ्कुर्व्वन् वामहस्तेन कम

ण्डलुङ्गृह्णातीति वाक्ये आचमनकाले वामहस्तेन कमण्डलुधारणविदिति हरिभक्तिदीपिका। तत्रापि देवतीर्थेनैव "सम्मार्ज्जनबलिकर्म्मभोजनप्रदानानि दैवेन" इति हारीतोक्तेः। यद्यप्यञ्जलिपूजायां शिष्टाचारोस्ति तथापि न स प्रमाणम्। श्रुतिस्मृतिविहितो धर्म्मस्तदलाभे शिष्टाचारः प्रमाणमिति वसिष्ठवचनेन तयोरविरोधे शिष्टाचारस्य प्रमाणत्वबोधनादित्यवधेयम्। एवञ्च सति यदागमोक्तपूजायाम् "जपान्ते देवतान्ध्यात्वा दद्यात्पुष्पाञ्जलित्रयम्" इत्यादिवचनेनाञ्जलिपूजनम् तत्रापि वामहस्तयोगमात्रम्पुरस्कृत्य पुष्पत्यागो दक्षिणापि दक्षिणहस्तेनैव। "तौ युतावञ्जलिः पुमान्" इत्याद्यमरकोशाभिधानस्वरसेनवामकरयोगमात्रेणापि दक्षिणकरस्याञ्जलिपदशक्तेर्व्युत्पत्तिसिद्धायास्तादवस्थ्यादिति हरिभक्तिदीपिका। सर्व्वे चोपचाराः प्रोक्ष्यैव देयाः "नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्ये च कर्म्मणि" इतिवायुपुराणात्। "यद्दीयते च देवेभ्यो गन्धपुष्पादिकन्तथा। अर्घपात्रस्थितैस्तोयैरभिषिच्य समुत्सृजेत्"॥इति कालिकापुराणाच्च। प्रोक्षणमुत्तानेन हस्तेन "उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्। तिरश्चाभ्युक्षणम्प्रोक्तन्न्यञ्चतावोक्षणं स्मृतम्॥" इति स्मृतेः। यत्प्रक्षालनयोग्यन्तत्त्रिः प्रक्षालनीयम् "त्रिर्देवेभ्यः क्षालयेत् द्विर्म्मनुष्येभ्यः सकृत्पितृभ्यः" इति गोभिलीयात्। शिवेतरदेवपूजाम्प्रातः प्राङ्मु

खः सायम्पश्चिमाभिमुखः रात्रावुदङ्मुखः कुर्वीत "प्राक्पश्चिमोदगास्यश्च प्रातःसायन्निशासु च" इतिभविष्यपुराणादिति छंदोगाह्निकम् । स्मृतिदीपिकायां तु पश्चिमपदेन न तिस्रस्तत्र दिशो ग्राह्या 'ऐन्द्री सौम्या पराजिता' इति वचने पश्चादभिहितैशानीं सायम्पूजायाङ्गृहीतवान्।दिवा तु प्रागुदगैशान्यान्यतमाभिमुखो देवान्पूजयेत्। "यत्र दिङ्नियमो नोक्तो होमपूजादिकर्म्मसु । तिस्रस्तत्रदिशो ग्राह्या ऐन्द्री सौम्या पराजिता ॥" इति दक्षवचनात् । अपराजिता ऐशानी । शिवपूजा तु सदोदङ्मुखेनैव "रात्रावुदङ्मुखः कुर्य्याद्देवकार्य्यं सदैव हि।शिवार्च्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः॥"इति गोभिलवचनात् "शंकराराधनन्तद्वत्सदा कुर्य्यादुदङ्मुखः ।" इति गौतमवचनाच्चेति हरिभक्तिदीपिका । स्थिरप्रतिमापूजां तु प्रतिमाभिमुखस्तिष्ठन्नेव कुर्य्यात् 'शुचिः संभृतसम्भारः प्राग्दर्भे कल्पितासनः । आसीनः प्रागुदग्वार्च्चेदर्च्चायामथ सम्मुखः ॥" इति वचनात् । तथैव शिष्टाचाराच्च एवञ्च पूर्व्वोत्तरमुखस्थितायाः प्रतिमायाः पूजनम्पश्चिमदक्षिणाभिमुखेनैव कार्य्यमिति सिद्धम् । गौडनिबंधे तु–"प्राक्पश्चिमोदगास्यश्च प्रातः सायन्निशासु च ।" इत्यनेन सायम्पश्चिमाभिमुखःपूजनन्नान्यदेवपूजायामन्वेति किन्तु सप्ताक्षरसूर्य्यमन्त्रविषय एव शिष्टाचारोऽपि

तथा इति। दाक्षिणात्यास्तु-प्रतिमाः प्राङ्मुखीरुदङ्मुखो यजेत् अन्यत्र प्राङ्मुखः एतच्चस्थिरप्रतिमाविषयमित्याहुः अन्यत्र उत्तराभिमुखप्रतिमायाम् । ऊर्द्ध्वपुण्ड्रंविधाययेषान्देवानांयानि वाहनानि तत्रस्थितान् तान्ध्यात्वा पूजयेत् " आत्मानम्पूजयित्वा च सुगन्धिसितवाससा । सुमुहूर्ते यजेद्देवान्स्वकीयासनसंस्थितान् ॥ " इति देवीपुराणात् । आसनं वाहनम् । नातिलकी कर्म्म कुर्य्यात् "दानं यज्ञस्तपो होमः स्वाध्यायः पितृतर्प्पणम् । भस्मीभवति राजेन्द्र ऊर्द्ध्वपुण्ड्रं विना कृतम्॥" इति स्मृतेरिति हरिभक्तिदीपिका। स्नानीयादिदानकाले घण्टा वादनीया " स्नानार्च्चनक्रियाकाले घण्टानादङ्करोति यः । पुरतो वासुदेवस्यइत्यादिवचनात् । पूजाकाले गीतवाद्यनृत्यान्यपि सति सम्भवे देवतासन्निधौ कुर्य्यात् कारयेद्वा विष्णुधर्म्मे-" फलानि दत्त्वा देवेभ्यः सफलां विन्दते श्रियम् । गीतवाद्यप्रदानेन सौख्यम्प्राप्नोत्यनुत्तमम् ॥ प्रेक्षणीयप्रदानेन रूपवानभिजायते । " प्रेक्षणीयं नृत्यम् । गीतादेर्हानन्देवसमीपे करणमात्रमिति शूलपाण्यादयः । अत्रेदम्बोध्यम्-यद्यपि एकपाकेन वसतां पितृदेवद्विजार्च्चनम् " एकम्भवेद्विभक्तानान्तदेव स्याद् गृहेगृहे । ' इति वचनादविभक्तानाङ्नीयसान्देवपूजानिषेधोस्ति तथापि "पृथगप्येकपाकानाम्ब्रह्मयज्ञो द्विजन्मनाम् । अग्निहोत्रं सुरार्चा च नित्यं सन्ध्या

भवेत्पृथक् ॥ " इत्याश्वलायनवचनादाह्निकी पूजा कृष्णाष्टमीपूजा शिवरात्र्यादिपूजा च कनीयसा मपि कर्त्तव्या । निषेधस्तु सावकाशनागपूजकोजागरासुखरात्र्यादिकाम्यपूजाविषयक इति वोध्य म् । अपरार्क्ककृतयाज्ञवल्क्यटीकायां योगियाज्ञवल्क्यः–एवं सम्पूज्य देवेशङ्क्षणन्ध्यात्वा निरञ्जनम्। ततोवलोकयेदर्क्कं हंसः शुचिषदित्यपि ॥ " इति विशेषः । तदयम्प्रकरणार्थः–पूजाकाले सुवर्णरजत कुशत्रयाणि दक्षिणहस्तानामिकायाम्पवित्रञ्च धारयेत् । गौडास्तु–दक्षिणहस्तानामिकायां सुव र्णं तर्ज्जन्यां रजतं कनिष्ठिकायां खड्गञ्च धारयेदिति वदंति। यत्र जलप्रतिमादौ स्थिर एव देवसन्निधिस्त त्रावाहनं विसर्ज्जनञ्च विनैव पूजाविधेयेति शूलपाणिप्रभृतयः । हरिभक्तिदीपिकायाङ्गणेश्वरमिश्रास्तु– शालग्रामशिलायामपि विष्णोरावाहनंविधेयमदृष्टार्थत्वादित्याहुः । हरिभक्तिविलासे स्थिरायामर्च्चाया म्पूजने उद्वासावाहनयोरभावः चलायां विकल्पः स्थण्डिले उभयङ्कार्य्यमित्युक्तम् । आवाहनवाक्यन्तु आगच्छेति पदानन्तरं सम्बोधनान्तदेवतानामेति छन्दोगाह्निकम्। सम्बोधनान्तदेवतानामानन्तरमाग च्छेति पदमितिवाचस्पतिमिश्रादयः।एते चोपचारा दक्षिणहस्तस्थदेवतीर्थेनैव देयाः।घण्टावादनन्तु वाम हस्तेन दक्षिणकरस्यार्घादिनावरुद्धत्वात् । पुष्पाञ्जलिदाने वामहस्तयोगमात्रपुरस्कारः पुष्पत्यागो

दक्षिणहस्तेनैनेवेति हरिभक्तिदीपिका सर्व्वे चोपचारा अर्घपात्रस्थजलैः प्रोक्ष्यैव समर्प्पणीयाः । प्रोक्षणमुत्तानदक्षिणहस्तेन । यत्तुप्रक्षालनयोग्यन्तत्त्रिःप्रक्षालनीयम् शिवेतरदेवतापूजाम्प्रातः प्राङ्मुखः सायम्पश्चिमाभिमुखः रात्रावुदङ्मुखः कुर्व्वीतेति श्रीदत्तोपाध्यायादयः । वामदेवोपाध्यायास्तु-सायमैशान्याभिमुख इत्युक्तवन्तः वस्तुतः दिवा प्रागुदगैशान्यन्यतमाभिमुखो देवान्पूजयेत् रात्रावुदङ्मुख एव शिवपूजातुसदोदङ्मुख एव कुर्य्यात् गौडास्तु-सायम्पश्चिमाभिमुखत्वं सूर्य्यपूजामात्रे इत्याहुः । स्थिरप्रतिमापूजनन्तु प्रतिमाभिमुखः सन्नेव कुर्य्यात् दाक्षिणात्यास्तु-प्रतिमा स्थिराः प्राङ्मुखीरुदङ्मुखः उदङ्मुखीः प्राङ्मुखो यजेदित्युक्तवंतः ऊर्द्ध्वपुण्ड्रं विधाय स्वस्ववाहनसहिताः देवताः ध्यात्वा पूजनीयाः पाद्यार्घाचमनस्नाननैवेद्यचामरवीजनकाले घण्टा वादनीया । पूजाकाले गीतवाद्यनृत्यान्यपि सति सम्भवे कुर्य्यात्कारयेद्वा इति एकपाकेन वसद्भिरपि सोदरभ्रातृभिः पृथक्पृथङ्नित्यदेवपूजा विधेया कृष्णाष्टमीशिवरात्रिपूजावत् । सकलपूजोत्तरन्देवेशङ्क्षणन्ध्यात्वा सूर्य्यमवलोकयेत् । "हंसः शुचिषद" इति मंत्रञ्च पठेदिति गौडाः ॥ इति पूजापंकजभास्करे प्रकीर्णकन्नाम

अथदेवपूजाप्रयोगः तत्र बन्ध्यारोगार्त्तजीर्णदेहनवप्रसूताऽमेध्यभक्षिकातिरिक्तगोव्यक्तिसम्बन्धिशुचिदेशगृहीताकाशगृहीतान्यतरगोमयोपलिप्तनिष्टगंधशब्दवर्ज्जितशुचौ देशे देवासनाग्नीचासने दिवाप्राङ्मुख उदङ्मुख ऐशान्याभिमुखो वा रात्रावुदङ्मुख एव सुखोपविष्टः शुचिः शुचिवस्त्रद्वयधरो मौनी ध्यानपरः कामरागभयद्वन्द्वमात्सर्य्यत्वराक्रोधरहितः तन्मनाः सुमना दक्षिणपार्श्वे पुष्पकरण्डकं वामेऽपर्य्युषितजलपूर्णपात्रमितरच्च पूजोपकरणं यथा सन्निवेशमासाद्य जल पूर्णमर्घपात्रमग्रतो धृत्वा तज्जलेन पूजास्थानन्तद्द्रव्याणि च प्रोक्ष्य गंधादिनात्मानमभ्यर्च्य आगच्छेति पदानन्तरं सम्बोधनांतेन देवतानाम्ना सम्बोधनान्तदेवतानामोत्तरमागच्छेति पदेन वा देवतामावाह्य स्थापयित्वा प्रतिष्ठितप्रतिमाशालग्रामनार्म्मदलिंगादावावाहनं विनैव दक्षिणकरस्थदेवतीर्थेन आसनपाद्यार्घाचमनीयानि दत्त्वा स्नपयित्वा यथालाभवस्त्रालंकारयज्ञोपवीतादीनि दत्त्वा गन्धपुष्पधूपदीपनैवेद्यानि च दत्त्वा दीक्षितो जप्त्वाऽदीक्षितस्तु जपमकृत्वैव प्रदक्षिणीकृत्य प्रणम्य स्तुत्वा ध्यात्वा भगवन् भगवति वा क्षमस्व स्वस्थानङ्गच्छेति विसर्ज्जयेत् । प्रदक्षिणन्तु “एकाञ्चंड्यां रवौसप्त त्रीणि दद्याद्विनायके । चत्वारि केशवे कुर्य्याच्छिवे चार्द्धप्रदक्षिणम् ॥” इत्युक्तसङ्ख्याकङ्कार्य्यम्

अनुक्तदेवानान्तु त्रिःकार्य्यमिति ज्ञेयम् । अत्र ध्यानन्तु मत्स्यपुराणीयमेव सूर्य्यादीनां बोध्यम् । प्रतिमामानोन्मानादेर्म्मत्स्यपुराणीयस्यैव शिष्टैराद्दृतत्वेन ध्यानस्यापि तदीयस्यैव ग्रहीतुमुचितत्वात् । अत एव दुर्गाभक्तितरङ्गिण्याम्मत्स्यपुराणीयमेव ध्यानमभिहितम् । गौडनिबन्धे पूजाकर्त्रासनदोषगुणौ नारदपञ्चरात्रे– "वंशासने दरिद्रत्वम्पाषाणे व्याधिसम्भवम् । धरण्यान्दुःखसम्भूतिन्दौर्भाग्यन्दारुजासने ॥ तृणासने यशोहानिम्पल्लवे चित्तविभ्रमम् । दर्भासने व्याधिनाशङ्कम्बलन्दुःखमोचनम् ॥" इति । अन्यत्र च "कृष्णाजिनं व्याघ्रचर्म्म कौशेयं वेत्रनिर्म्मितम् । वस्त्राजिनङ्कम्बलं वा कल्पयेदासनम्मृदु ॥" इत्यभिहितम् । विष्णोस्तु नरसिंहपुराणीयन्ध्यानङ्ग्राह्यं निबन्धकृद्भिरुक्तत्वात् । गौडैस्तु– "सलिले यदि कुर्वन्ति देवतानाञ्च पूजनम् । तत्राप्यासन आसीनो नोत्थितस्तु सदाचरेत् ॥" इति कालिकापुराणवचनाज्जलेपि आसने उपविष्ट एव पूजाङ्कुर्य्यात् न तु सन्ध्यावन्दनतर्प्पणवत् ऊर्द्धस्थितो निरासनो वेति विशेष उक्तः॥इति पूजापङ्कजभास्करे पूजासामान्यप्रयोगो ना

अथसूर्य्यपूजा।"यः प्रदद्याद्गवां लक्षन्दोग्ध्रीणां वेदपारगे। एकाहमर्च्चयेद्भानुन्तस्य पुण्यन्ततोधिकम्॥यः सूर्य्यम्पूजयेन्नित्यम्प्रणमेद्वापि भक्तितः।तस्य भोगश्च मोक्षश्च प्रभुस्तुष्टः प्रयच्छति॥" "यजेदेकं सहस्रांशुम्मोक्षकामो न संशयः ।मेरुमन्दरतुल्योपि राशिः पापस्य कर्म्मणः । आसाद्य भास्करम्मर्त्यस्तन्नाशयतितत्क्षणात्॥"इत्यादिभविष्यपुराणीयवचनात् सूर्य्यपूजा महाफला।अस्य ध्यानं मत्स्यपुराणे-भुजङ्गरश्मिबद्धरश्मिवत्सप्ताश्वैकचक्ररथस्थं नानाभरणभूषितं भुजद्वयधृतस्कन्धद्वयस्थपुष्करद्वयंवस्त्रयुग्मसमोपेतं क्वचिच्चोलकच्छन्नवपुषंतेजः संवृतचरणद्वयं विचित्रमुकुटयुतं पद्मगर्भसमप्रभं सुलोचनं पार्श्वद्वयस्थितखङ्गहस्तदण्डपिङ्गलप्रतीहारं पार्श्वस्थितकृतलेखनीहस्तधातारं नानादेवगणावृतं पद्मपत्रसन्निभारुणसारथिं सूर्य्यन्ध्यायेत्, पद्मस्थं



सप्तसञ्ज्ञकाश्वस्थं वा ध्यायेदिति । एतत्पूजा सामवेदिना " ॐ बण्महाँ २ ॥ ऽअसि सूर्य्य बडादित्यमहाँ २ ॥ ऽअसि महस्ते सतो महिमापनिष्टममह्नादेव महाँ २ ॥ ऽअसि ॥ " अनेन मन्त्रेण यजुर्व्वेदिना " ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्त्यञ्च हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ " इति मन्त्रेण कार्य्या इमौ च मन्त्रौ कौथुमशाखिमाध्यन्दिनशाखिनोरुक्तौ । एवमन्यैरापस्तंबीयवेदस्वशाखीयमन्त्रैः सूर्यपूजा विधेया । एवमन्यदेवतापूजायामपिबोध्यम् । अस्यार्घे भविष्यपुराणम्–"योष्टाङ्गमर्घमापूर्य्य भानोर्म्मूर्द्ध्नि निवेदयेत् । दशवर्षसहस्राणि वसेदर्कस्य मन्दिरे ॥ आपः क्षीरङ्कुशाग्राणि घृतन्दधि तथा मधु । रक्तानि करवीराणि तथा रक्तञ्च चन्दनम्।अष्टाङ्ग एष ह्यर्घो वै ब्रह्मणः परिकीर्तितः॥"इति अथ पञ्चोपचाराः तत्रादौगंधाः तत्र भविष्यपुराणम्–"चंदनागुरुकर्प्पूरकुङ्कुमोशीरपद्मकैः । अनुलिप्तो नरैर्भक्त्या ददाति मनसेप्सितम्॥" पद्मकंपद्मकाष्ठम् । तथा–"कालेयकन्तुरुष्कञ्च रक्तचंदनमेव च । यान्यात्मनः सदेष्टानि तानिशस्तान्यपाकरु ॥ " इति तरुष्कं शिल्हकम् । अथ निषिद्धपुष्पाणि–आगस्त्यादरूप

काऽतिमुक्ताऽर्काऽशोकाऽम्रातकोत्पलकदंबकरवीर कर्णिकारकाञ्चनालकालतुलसीकाशकिंशुककिङ्किरातकुङ्कुमकुन्दकुब्जककुरुण्टककुशकुशेशयकेशरकैरवचम्पकजयाजवाजातीतगरतिरीटकत्रिसन्ध्यातिलकद्रोणनवमल्लिकानागकेशरनीलोत्पलपद्मपाटलायावन्तिकपीताम्रानपुन्नागबाणबृहतीमंदारमल्लिकामालतीमुकुरयूथीरोकनरक्तोत्पललोधवक–बकुल–ववर्बरमल्लिकावासन्तीविचकिलवोडकशमीशतपत्रिका–शतपत्र–शाल्मली–श्वेतमंदार–श्वेतपद्म–सिंहास्यानि। विहितनिषिद्धन्तु पिण्डी तगरम्। गौडनिबन्धे–दमनक–द्रोण-मंदार–शिंशपा–पुष्पाणि–निषिद्धान्युक्तानि निषिद्धानि तु अपराजिता–आम्रातक–उन्मत्त–कांची–कृष्णला–कुसुम्भ–वनतगरीपुष्पाणि। पत्रेषु–कालतुलसी–केतकी–तमाल–तुलसी–दूर्वा–भृंगराज–बिल्व–शमी–शतपत्रिकापत्राणि–विहितानि। गौडास्तु–सूर्य्यलंबोदराभ्यां बिल्वपत्रं न दातव्यम्। बिल्वपत्रमुपक्रम्य–"पूज्या एतेन वै देवाः सूर्य्यलम्बोदरौ विना।" इति बृहद्धर्म्मपुराणवचनादिति वदन्ति। विहितपुष्पपत्राभावे विहितनिषिद्धानि। तदभावे निषिद्धवर्ज्जमन्यदप्युपादेयं तदभावे त्वाह–"अलाभेन तु पुष्पाणाम्पत्राण्यपि निवेदयेत्। पत्राणामप्यलाभे तु फलान्यपि निवेदयेत्॥फलानामप्यलाभे तु तृणगुल्मौषधीरपि। ओषधीनामलाभे तु भक्त्या भवति

पूजितः ॥" इति भविष्यपुराणम् । पत्राण्यपीति विहितपुष्पवृक्षपत्राण्यपीत्यर्थः । ओषधीरपीत्यपिना तण्डुलजलानीति शूलपाणिः । तथा "प्रत्येकमुक्तपुष्पेभ्यो दश सौवर्णिकं फलम् । स्रजोभिर्म्मुनिशार्दूल तदेव द्विगुणम्भवेत् ॥ मुकुराणि कदम्बानि रात्रौ देयानि भानवे । दिवाशेषाणि पुष्पाणि दिवारात्रौ च मल्लिका ॥ गंधवंत्यपवित्राणि कुसुमानि विवर्ज्जयेत् । गंधहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ॥ इत्यादि । धूपस्तु–सघृतगुग्गुलु–कुंदुरु–कृष्णागुरु–सघृतमहिषाख्यगुग्गुलु–श्रीवास सघृतबिल्व–देवदारु–सौगंधिक–तुरुष्क–अगुरु–नमेरु–कस्तूरी–कर्प्पूरयुक्तागुरुरूपा विहिताः । कंदुरुः सल्लकीरसः । श्रीवासः सरलोद्भवः । सौगंधिकः सौधेन इति प्रसिद्धः । तुरुष्कः सिह्लकः । अस्य दीपे घृतं तदभावे तैलं तं च दत्त्वा न निर्व्वापयेदित्यादिसामान्यप्रकरणोक्तमत्रानुसन्धेयम् । नैवेद्यानि तु–संयावकृसरापूपपायसगुडसंयुक्तमोदकरसालाशालितण्डुलप्रस्थषष्टिकौदनयवगोधूमतिलमुद्गमाषमांसपक्वफलपानकादीनि विहितानि । रसालातूक्ता सूपकारतन्त्रे–" अर्द्धाढकं सुचिरपर्य्युषितस्य दध्नः खण्डस्य षोडशपलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचद्विकर्षं शुंठ्याः पलार्द्धमपि चार्द्धपलं चतुर्णाम् ॥" श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा कर्प्पूरधूलिसुरभी

कृतभाण्डसंस्था । एषा वृकोदरकृता सरसा रसाला या स्वादिताभगवता मधुसूदनेन॥"इति । अस्य रक्तवस्त्रम्प्रियमन्योपि रक्तोपहार इति छन्दोगाह्निकम् । अस्य नैवेद्यम्मगेभ्योदेयम् । सूर्य्यमधिकृत्य भविष्यपुराणे-" प्रणम्य दण्डवद्भूमौ नमस्कारेण योर्च्चयेत् । स याङ्गतिमवाप्नोति न ताङ्क्रतुशतैरपि॥" इत्युक्तेः सूर्य्यप्रणामो महाफलः । प्रदक्षिणन्तु सप्तवारङ्कार्य्यम् " एकञ्चण्ड्यां रवौ सप्तत्रीणि कुर्य्याद्विनायके।चत्वारि केशवे कुर्य्याच्छिवे चार्द्धप्रदक्षिणम्॥" इति प्रागुक्तेः दक्षिणावर्त्तेन देवमुद्दिश्य सर्व्वदिक्षु भ्रमणम्प्रदक्षिणम् । गौडाः-विष्णोरग्रे तु सूर्य्यस्य भ्रमरिकारूपाम्प्रदक्षिणान्न कुर्य्यात्, विष्णुस्मृतौ - " कृष्णस्य पुरतो नैव सूर्य्यस्यैवम्प्रदक्षिणाम् । कुर्य्याद्भ्रमरिकारूपां वैमुख्यापादनीम्प्रभोः ॥ " इत्यभिधानात् । सूर्य्यसन्निधौ शंखो न वादनीयः " शिवागारे झुल्लकञ्च सूर्य्यागारे च शंखकम् । दुर्गागारे वंशवाद्यम्मधुरीञ्च न वादयेत् ॥ " इति गौडदाक्षिणात्यधृतवचनात् । एतत्स्नानीयजलं लंघनयोग्यस्थलादन्यत्र प्रक्षेपणीयम् " यथा न लंघयेत्कश्चित्स्नपनं भास्करस्य च । तथा कार्य्यम्प्रयत्नेन लंघितं ह्यशुभावहम्॥ तामिस्रन्नरकङ्कर्त्ता लंघयेद्यः स रौरवम् ।" इति भविष्यपुराणात् । तामिस्रं रौरवमित्युभयत्रापि यातीति शेषः । कर्त्ता लंघनानुकूलवर्त्म्मप्रक्षेपादेरिति छन्दोगा

ह्निकम् । लंघनस्य स्नपनस्य वेति शूलपाणिः । गौडनिबन्धे—" उदके तरुमूले वा निर्म्माल्य न्तस्य सन्त्यजेत् । " इति भागवतीयात् । तरुमूलोदकान्यतरत्र निर्म्माल्यप्रक्षेपणमुक्तम् । अथा यमत्र प्रयोगः—अक्षतान्गृहीत्वा यथोक्तन्ध्यायन् ओं भूर्भुवः स्वर्भगवन् सूर्य्य इहागच्छेत्यावाह्य इह तिष्ठेति जलादौ पूजाधारे स्थापयित्वा पाद्यमादाय इदम्पाद्यम् ॐ सूर्य्याय नम इति दद्यात् तत एषोर्घ इत्यर्घन्दत्त्वा इदमाचमनीयम् इदं स्नानीयम् इदम्पुनराचमनीयम् एष गन्धः इदमनु लेपनं वा इदं रक्तचन्दनमिदमक्षतम् मन्त्रमुच्चार्य्य तद्विना वा इदम्माल्यम् एतानि पुष्पाणि इदम्पुष्पमिति वा त्रिः पुष्पाणि एतान्यमुकपत्राणि एष धूपः एष दीपः इदं नैवेद्यमिति क्रमेण पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि गन्धपुष्पधूपदीपनैवेद्यानि च पृथक्पृथक् दद्यात् । अथवा आवाह्य इह तिष्ठेत्युक्त्वाधारे स्थापयित्वा एतानि पाद्यार्घाचमनीयस्नानीयपुनरा चमनीयानि ॐ सूर्याय नम इति समस्तवाक्येनैकदैव पाद्यादीनि दत्त्वा गन्धादिपञ्चकं पृथक्पृथक् दद्यात् । अथवा पाद्यादिपुनराचमनीयान्तानि समस्तवाक्येन दत्त्वा गन्धमक्षतम्पुष्पाणि च दत्त्वा

एतानि धूपदीपनैवेद्यानीति समस्तवाक्येन धूपादीनि दद्यात् ततो दीक्षितश्चेज्जप्त्वाऽदीक्षितो जपमकृत्वैव सप्तप्रदक्षिणानि कृत्वा प्रणम्य स्तुत्वा ध्यात्वा ॐ भगवन् सूर्य्य पूजितोसि प्रसीद क्षमस्वेति प्रार्थ्य स्वस्थानङ्गच्छेति विसर्ज्जयेदिति छन्दोगाह्निकम्।क्षमस्वेति विसर्जयेदिति वाचस्पतिमिश्रादयः ततः ॐ चण्डभास्कराय नम इति निर्म्माल्यं क्षिपेदिति दाक्षिणात्याः । एतन्नैवेद्यम्मगातिरिक्त ब्राह्मणादिभिर्नभक्षणीयम् "निर्म्माल्यन्नोपभोक्तव्यंरुद्रस्य तपनस्य चाउपभुज्य च तन्मोहान्नरके पच्यते ध्रुवम् ॥ "इति गौडधृतभविष्यपुराणात् ॥ इति पूजापङ्कजभास्करे सूर्य्यपूजाकथनन्नामैकादशः प्रकाशः ॥ ११ ॥

**अथ गणपतिपूजा।** सा यथा–तत्र प्रथमं गजवक्त्रं त्रिलोचनं लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनं स्तब्धकर्णं बृहच्छुण्डम् एकदन्तं पृथूदरं दक्षिणोर्द्धकरेण स्वदन्तं दक्षिणाधः करेणोत्पलं वामोर्ध्वकरेण लड्डुकं वामाधः करेण परशुञ्च दधानं बृहत्संक्षिप्तवदनं पीनस्कन्धाङ्घ्रिपाणिकम् ऋद्धिबुद्धिभ्यां युक्तं मूषकवाहनं गणपतिं ध्यात्वाऽक्षतमादाय–

ॐ भूर्भुवःस्वर्भगवन् गण
वाह्य स्थापयित्वा " ॐ
ग्राभं सङ्गृभाय महाहस्ती
सामवेदी, ॐ गणानान्त्वा
न्त्वा प्रियपति ँ हवामहे
हवामहे व्वसो मम आहमया
धम् ॥ " इति मन्त्रेण यजु
इति सामान्यप्रकरणोक्तपा
येत् प्रदक्षिणश्चास्यत्रिः कु
गर वासन्ती बिल्वपत्र तुल
पहारश्चास्यातिप्रियः ॥
पूजाकथनं नाम द्वादशः



पते इहागच्छ इहतिष्ठेत्या
आतून इन्द्रक्षुमन्तश्चित्रं
दक्षिणेन । " इति मन्त्रेण
गणपति ँ हवामहे प्रियाणा
निधीनान्त्वा निधिपति ँ
निगर्भधमात्वमयासिगर्भ
र्व्वेदी, ॐ गणपतये नमः
द्यादिभिर्व्विसर्ज्जनान्तैः पूज
र्य्यात् एतत्पूजने अशोकत
सीपत्राणि निषिद्धानि रक्तो
इतिपूजाप०भास्करे गणपति
प्रकाशः ॥ १२ ॥

अथाग्निपूजा। सा यथा—



सनस्थितं बालार्कसदृशवदनं मण्डलुं दक्षिणहस्तधृताक्षसूत्रं ह्नमुज्ज्वलमग्निन्ध्यात्वा "ॐ श्ववेदसम् अस्ययज्ञस्यसुक्रतु दी "ॐअग्निन्दूतम्पुरोदधे हव्य यादिह" इति मन्त्रेण यजु मान्योपचारप्रकरणोक्तपाद्यादि अस्यापि त्रिः प्रदक्षिणङ्कार्य्यं ग्निपूजा कथनन्नाम त्रयोदशःप्र

दीप्तं सुवर्णवपुषं चन्द्रार्द्धाकारा यज्ञोपवीतिनं वामहस्तधृतक मूर्द्धसप्तशिखं कुण्डस्थमजवा अग्निन्दूतव्वृँणीमहे होतारव्विँ म्॥" इति मन्त्रेण सामवे वाहमुपह्नवे देवाँ २॥ आसाद व्वेंदी, ॐ अग्नये नमः इति सा भिः विसर्ज्जनान्तैः पूजयेत्। म्॥ इति पूजापङ्कजभास्करे काशः॥ १३॥ छ॥

अथ दुर्गापूजा । तत्र भविष्ये-" यःसदा पूजयेद्दुर्ग्गाम्प्रणमेद्वापि भारत । स योगी सामुनिर्द्धीमांस्तस्य मुक्तिः करे स्थिता ॥ " तथा-अग्निहोत्राणि कर्म्माणि वेदयज्ञाः सदक्षिणाः । चण्डिकार्चनस्यैते लक्षांशेनापि नो समाः ॥ " इत्युक्तेर्दुर्ग्गापूजा महाफला । सा च सामान्याधारप्रकरणोक्ताधारे कार्य्या शूले चातिप्रशस्ता । अस्या ध्यानं मत्स्यपुराणे-दशभुजा जटाजूटयुक्ता अर्द्धेन्दुकृतशेखरा त्रिलोचना पूर्णेन्दुसदृशानना अतसीपुष्पवर्णा सुलोचना नवयौवनसंयुक्ता सर्व्वाभरणभूषिता चारुदशना पीनोन्नतपयोधरा त्रिभङ्गस्थानसंस्थाना ऊर्द्ध्वाधःक्रमेण दक्षिणैर्ब्बाहुभिः त्रिशूलखड्गचक्रतीक्ष्णबाण शक्तिधरा ऊर्द्ध्वाधःक्रमेण वामैर्ब्बाहुभिः खेटकपूर्णचापपाशाङ्कुशघण्टापरश्वन्यतरधरा अधस्ताद्द्विशिरस्कमहिषशिरश्छेदोद्भवखड्गपाणिरक्तरक्तीकृताङ्गरक्तविस्फारितनेत्रनागपाशवेष्टितभ्रुकुटीभीषणाननदेवीशूलनिर्भिन्नहृदयमहिषोपरिधृतवामपादाङ्गु



ष्ठा सपाशवामहस्तधृतदानवकेशा वमद्रुधिरवक्रसिंहोपरि धृतदक्षिणपादा इति। अस्याः पूजामन्त्रस्तु—"ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः स नः पर्षदति दुर्गाणि विश्वानावेवसिन्धुन्दुरिताऽत्त्यग्निः ॥" इति। "ॐ इमस्तोममर्हते जातवेदसे रथमिव सम्महे मामनीषया भद्राहिनः प्रमतिरस्य संसद्यग्ने सख्ये मारिषामावयन्तव।" इति वा सामवेदिनाम्। "ॐ अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन स सस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥" इति यजुर्वेदिनाम्। अस्या अर्घः—"आपः क्षीरङ्कुशाग्राणि अक्षतादधितण्डुलाः। सहा सिद्धार्थका दूर्वा कुङ्कुमो रोचना मधु। अर्घोयङ्कुरुशार्दूल द्वादशाङ्ग उदाहृतः ॥" इति। अक्षता यवा इति निबन्धकारः। सहा सहदेवा नाम ओषधी गन्धास्तु छन्दोगाह्निके—चंदनागुरु—कर्पूर-कुंकुम—कृष्णागुरु—रक्तचंदनानि। पुष्पाणितु—अगस्त्यऽतिमुक्त—अपराजिता—सर्व्ववर्णा—अर्का—अर्जुन अशोकोत्पल—कदम्ब करवीर—किङ्किरात—कर्णिकार—किंशुक कुंकुम—कुब्जक—कुन्द कुमुद कुरुण्टक—कुशमञ्जरी—कूष्माण्ड—केतकी—चम्पकजवाजाती—तगर-तिरीटक—दमनक—द्रोण—धान्यपुष्प—धत्तूर—नवमल्लिका—नागनीलोत्पल—पङ्कज—पद्म—पुन्नाग—बन्धूक—बृहती—भद्रामंदार—मरुबक—मल्लिकामा—

धवी यूथीरक्तपङ्कज रक्तोत्पल लोध्र-बक-बकुल -बर्वरी-विचकिल-शमी-शतपत्रिका—शिंशपा—श्वेतपंकज सिंदुवार-सर्वौषधीसुरभीरूपाणि—विहितानि—अत्र निषिद्धानि न संति पुष्पाणि । मन्दारार्कयोरत्र विधानात् "देवीनामर्कमंदारौ" इतिशातातपवचनन्दुर्ग्गेतरदेवीपरं सामान्यविशेषन्यायात् इतिशूलपाणिः। लक्ष्म्यास्तु द्रोणपुष्पमप्यागमे निषिद्धम्। पत्राणि तु—उदुम्बर-दमनक-धान्यनिम्ब-मरुबक-बिल्वब्रह्मवृक्ष लतासर्वौषधीनां विहितानि । दूर्वा तु--अङ्कुररूपा कोमलादूर्व्वाङ्कुरैश्चकोमलैरित्युक्तेः । दुर्ग्गान्नैवतुदूर्व्वय इति निषेधस्तु दूर्वांकुरातिरिक्तविषयः सामान्यविशेषन्यायात्।ब्रह्मवृक्षलता ब्रह्मवृक्षः पलाशस्तस्य लता माधव्यादिः । विहितपुष्पपत्राभावे ओषधीभिस्तदभावेजलेन तदलाभे मानसी पूजा कार्य्या । धूपे--गुग्गुलुसघृतगुग्गुलुसघृतमहिषाख्यगुग्गुलु कृष्णागुरुअगुरुशिह्लकसघृतबिल्वकर्पूरयुक्तागुरुकर्प्पूरचन्दनानि विहितानि । दीपे—घृतन्तैलञ्चसामान्यप्रकरणोक्तमेव विहितम् । विशेषतः स्वशरीरवसा विहिता । नैवेद्यं—सामान्यप्रकरणोक्तमेव। प्रदक्षिणञ्चैकवारम्एकञ्चण्डयाम् इत्युक्तेः। अस्याः प्रणामे फलं "सर्व्व यज्ञोपवासेषु सर्वतीर्थेषु यत्फलम् । तत्फलं लभते वीर प्रणम्य शिरसा सतीम्॥सम्प्रसारितहस्तो यो दण्डवत्प्रणतो भुवि। चंडिकापुरतो वीर स याति परमाङ्गतिम् ॥" सतींदुर्ग्गाम् ।"छित्त्वा भित्त्वा च

भूतानि हत्वा सर्व्वमिदञ्जगत् । प्रणम्य शिरसा देवीं सर्व्वपापैः प्रमुच्यते ॥" पूजाप्रयोगस्तु–अक्षतान्गृहीत्वा यथोक्तरूपान्दुर्ग्गान्ध्यायन् ॐ भूर्भुवःस्वर्भगवति दुर्ग्गे इहागच्छेत्यावाह्य इह तिष्ठेति स्थापयित्वा ॐ दुर्ग्गायै नम इति पाद्यादीनि दत्त्वा ॐ भगवति दुर्ग्गे पूजितासि प्रसीद क्षमस्वेति प्रसाद्य स्वस्थानं गच्छेति विसर्ज्जयेदिति ॥ इति पूजापंकजभास्करे दुर्ग्गापूजनकथनन्नाम चतुर्दश प्रकाशः ॥ १४ ॥

अथ शिवपूजा । सा च प्रतिमाद्यपेक्षया लिङ्गेति प्रशस्ता "अर्च्चायामर्च्चयेद्यो माम्पूर्णवर्षशतन्नरः । एकञ्च दिवसल्लिङ्गे सममेतन्न संशयः॥" न तुष्याम्यर्च्चितो भक्त्या तथा देवि नगात्मजे । लिंगेर्च्चितो यथा नित्यम्परितुष्यामि पार्व्वति॥" इति स्कन्दपुराणे गौरीम्प्रति शिववाक्यात् । लिङ्गञ्च–मृद्भस्मगोमयपिण्डताम्रकांस्ययज्ञियवृक्षस्फटिकरत्नाश्मादिभिर्विधेयम् । भविष्यपुराणे–"यः कृत्वा पार्थिवं लिङ्गमर्चयेच्छुभवेदिकम्।इहैव धनवान् श्रीमानन्ते रुद्रोभिजायते॥" शुभवेदिकं शोभनवेदिकायुक्तम् वेदिका पिण्डिका तथा–"आर्द्रामलकमात्रन्तु कृत्वा लिङ्गंहिरण्मयम् । सम्पूज्य रत्नखचितं शिवलोके महीयते ॥ मृद्भस्मगोशकृत्पिण्डताम्रकांस्यमयन्तथा । कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतन्दिवि ॥

इत्यभिधानात । पार्थिवं सर्व्वसिद्धिदमित्यागमे दर्शनाच्च । देवीपुराणे–वार्क्षवित्तप्रदं लिङ्गं स्फाटिकं सर्व्वकामदम् । नर्म्मदागिरिजं श्रेष्ठमन्यद्वापिहितिलिङ्गवत् । कृत्वा पूजय विप्रेन्द्र लप्स्यसे चेप्सितम्फलम् ॥ " वार्क्षम् यज्ञियवृक्षभवम् । कृत्यप्रदीपे–सौवर्ण रत्नघटितं वाशिवलिङ्गं सकृत्पूजयतः शिवलोकमहितत्वम्फलमित्युक्तम् । पिण्डिकालक्षणमुक्त्वा लिङ्गपुराणे च–एवं रत्नमयङ्कुर्य्यात्स्फाटिकम्पार्थिवन्तथा । शुभदारुमयं वापि यद्वा मनसि रोचते ॥ " इत्यभिधानाच्च । अन्यत् शैलान्तरजम् । लिङ्गवत् लिङ्गाकारम् । अत्र च लिङ्गङ्कर्कशमतिक्षुद्रमतिस्थूलं चिपिटाकारं पिण्डिकाहीनं पिण्डिकाविषमवर्णव्यङ्गपिण्डिकम्मानोन्मानहीनं मानोन्मानहीनपिण्डिकञ्च निषिद्धम् । रत्नजलिङ्गे बाणलिङ्गे च लिङ्गपिण्डिकयोर्भिन्नभिन्नद्रव्यजत्वमपि न दोषाय मणिलिङ्गे दीप्तिमात्रमपेक्षितन्न तु मानोन्मानादिकम् तदुक्तं शूलपाणौ–मणिलिङ्गादौ मानादिहानिरपि न दोषाय । तदुक्तं मयग्रन्थे प्रथमपटले शिवपूजाप्रकरणे " समस्तमणिजातीनान्दीप्तिः सन्निधिकारणम् । मानोन्मानप्रमाणादि तेषु ग्राह्यन्न वै बुधैः ॥ " स्फटिकमुपक्रम्य पञ्चरात्रे–अत्यन्तगुणभूयिष्ठङ्किञ्चिद्दोषसमन्वितम् । अग्निहोत्रोपमं

लिङ्गन्न तद्भयकरम्भवेत् ॥ " मयग्रन्थे-' रत्नजम्बाणलिङ्गं वा सर्व्वं साध्वन्यलक्षितम् ' । इति । एतट्टीकायाम् अर्च्चायाश्चिद्रूपत्वात् पिण्डिकायाः प्रकृत्यात्मकत्वात् तयोर्य्योगः प्रतिष्ठेति सा च प्रकृत्यात्मनो रैक्यादेकद्रव्यजेत्युक्तम् । रत्नजलिङ्गबाणलिङ्गयोस्तु विशेषमाह-साध्वन्यलक्षितमिति अन्यथा लक्षितमपि साधु, अन्यद्रव्यजापि सा ध्वीत्यर्थः । तदुक्तं द्वादशसाहस्रे पिङ्गलातन्त्रे- " रत्नजे बाणलिङ्गे वा तदन्यद्रव्यजापि सा । " सा पिंडिकेत्यर्थ इत्युक्तम् बाणलिङ्गमपि कपिलं निषिद्धं पक्वजम्बूफलाकारन्त्वतिप्रशस्तमिति छन्दोगाह्निकादौ श्रीदत्तादयः । पार्थिवलिङ्गे सकृदेव पूजा कार्य्येति कृत्यप्रदीपेभिहितम् । स्मृतिदीपिकायाम्-आवाहनविसर्ज्जनप्रतिष्ठा बाण लिङ्गे न सन्ति तन्नैवेद्यञ्च ग्राह्यमित्युक्तम् । शिवपूजा सदोदङ्मुखेनैव विधेया यजमानः शम्भोर्जगत्संहारकर्तुः प्राचीन्न समाश्रयेत् संहारकर्त्तुः साम्मुख्यनिषेधात् । पञ्चवक्रपक्षे प्रधानं वक्त्रम्प्राग्व्यवस्थितम् । एकवक्रपक्षे तु सुतरामित्येतदर्थकात् " न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम् । न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत् ॥ " इति गौडधृतरुद्रयामलीयात् । जले तु शिवपूजा

निषिद्धा। स्वधर्म्मत्यागिना ब्राह्मणेतरेण शिवपूजा न कार्य्येति पुरस्तादुक्तम्। काम्यशिवपूजाकाले भस्मत्रिपुण्ड्रकरणं रुद्राक्षधारणञ्चावश्यकम् "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया। पूजितोपि महादेवो न स्यात्तस्य फलप्रदः॥" इति वचनात्। रुद्राक्षधारणफलं स्कांदे रुद्रवाक्यम्—"हस्ते बाह्वौ तथा कण्ठे मूर्द्धि रुद्राक्षधारणात्। अधृष्यः सर्व्वभूतानां रुद्रवद्विचरेद्भुवि॥ सुरासुराणां सर्व्वेषां वन्दनीयो यथा शिवः। ध्यानधारणाहीनोपि रुद्राक्षन्धारयेत्तु यः॥ सर्व्वपापविनिर्म्मुक्तः स याति परमाङ्गतिम्। लक्षन्तुजपतः पुण्यङ्कोटिर्भवति सङ्ख्यया॥ दशकोटिसमम्पुण्यन्धारणाल्लभते नरः। यावदेवशरीरस्थन्तावन्मृत्युर्न्न बाधते॥ अमन्त्रधारणादेषाङ्गुणा एते प्रकीर्तिताः। समन्त्रं धारयेद्यस्तु फलं वक्तुं न शक्यते॥" इति। एवञ्च "विना मन्त्रेण यो धत्ते स याति नरकन्ध्रुवम्।" इति निंदा मंत्रप्ररोचनामात्रपरेति शूलपाणिः। अथ ध्यानम्मत्स्यपुराणीयम्–आपीनोरुभुजस्कन्धस्तप्तकाञ्चन सन्निभः। अर्क्कवच्छुक्करश्मिसमूहयुक्तः चन्द्राङ्कितजटः विभुर्जटामुकुटधारी षोडशवत्सराकृतिः वारणह स्ताभबाहुः वृत्तजङ्घोरुमण्डलः ऊर्द्ध्वकेशः दीर्घायतलोचनः व्याघ्रचर्म्मपरीधानः कटिसूत्रत्रयान्वितः

हारकेयूरसम्पन्नः भुजङ्गाभरणः गण्डफलकः कुण्डलद्वयालङ्मूर्त्तिः सुशोभनः दक्षिणैर्बाहु वामैर्बाहुभिर्द्धृतखेटककपाल स्थजलं शिवे निषिद्धं "न शिवं रप्रकरणलिखितवचनात् । जानमध्वरस्य रुद्रं होतारं सत्य यित्नोरचित्ताद्धिरण्यरूपमवसे नाम्। "ॐत्र्यम्बकंयजामहेसु मिव बन्धनान्मृत्योर्म्मुक्षीय मा वाय च मयोभवाय च नमः शिवाय च शिवतराय च ॥ " शिवायेति द्विजातीनाम्। नमः पञ्चोपचाराः—गन्धद्रव्याणि च



नानाभरणभूषितबाहुः पीनोरु कृतः आजानुलंबबाहुः सौम्य भिद्धृतखड्गशक्तिदण्डशूलवरः नागखट्वाङ्गाक्षमाल इति। शङ्ख शङ्खवारिणा " इति पात्रविचा पूजामन्त्रस्तु— " ॐ आवोरा यजं रोदस्योः । अग्निम्पुरातन कृणुध्वम् ॥ " इति सामगा गन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुक मृतात् ॥" इति, ॐ नमःशम्भ शङ्कराय च मयस्कराय च नमः इति वा यजुर्वेदिनाम्। ॐनमः शिवायेति स्त्रीशूद्रयोर्ज्ञेयः। अथ न्दन अगुरु कर्प्पूर कुङ्कुम पन्न

काष्ठ–उशीर–कस्तूरी–कालेयक–कृष्णागुरु–शिह्लाक–आत्मेष्ट–इत्येतानि पुष्पाणि । अपराजिता–अपामार्ग–अर्क्क–अर्ज्जुन–अशोक–उदुम्बर–उशीर–करहाट–कारिका–कदम्ब–करवीर–कर्णिकार–कह्लार–काञ्चनाल–काश–किङ्किरात–कुङ्कुम–कुटज–कुब्जक–कुमुद–कुरबक–कुश–कूष्माण्ड–कुसुम्भ–केशर–कैरव–गिरिमल्लिका–चम्पक–चित्रक–चूत–जया–जाती–तगर–तिल–दमनक–द्रोण–धवल–धत्तूर–नागकेशर–नीलोत्पल–नेपाली–पद्म–पलाश–पाटला–पुंनाग–बाण–बृहती–भृङ्गराज–मंदार–मल्लिका–मोकन–रक्तोत्पल–वक–वकहुल–बकुल–विचकिल–विजय–बिल्व–शण–शमी–शाल्मली–शिखिनी–शिंशपा–श्वेतपद्म–श्वेतमंदार–सेवन्ती–स्थलकमल–इत्येतानि विहितानि भविष्ये–"कनकानि कदम्बानि रात्रौ देयानि शङ्करे । दिवाशेषाणि पुष्पाणि दिवारात्रौ च मल्लिका ॥" इति विशेषः । अत्र दमनकं चैत्रशुक्लचतुर्दश्यांविहितम् । वैशाखादिद्वादशसु मासेषु यथाक्रमं पाटलया १ पद्मैः २ बिल्वकह्लारैः ३ नवमल्लिकया ४ कदम्बचम्पकैः ५ पंकजजातीभ्याम् ६ शतपत्रिकया ७ नीलोत्पलैः ८ कुब्जकैः ९ कुन्दैः १० मरुवकेन ११ शतपत्रैः १२ पूजासर्वयज्ञसर्व्वदानफला

अङ्कोल–करञ्ज–कुन्द–केतकी–धातकी–निम्ब–बंधूक–भंटिका–मञ्जिष्ठ–मदन्तिका–माधवी–विभी

तक–यूथिका–शिरीष–श्वेतपाटला–श्वेतापराजिता–सर्ज्ज–सिन्दुवाराणां पुष्पाणि पत्राणि च निषिद्धानि वर्षव्यापिशिवपूजायाम्–कुन्दपुष्पम्माघे विहितमन्यथा तु निषिद्धम्माघेपि शूलपाणौ तु–दमनकपुष्पञ्चशिवशयनादारभ्य फाल्गुनान्तं यावदेव निषिद्धमित्युक्तम् पत्राणि तु–अपामार्ग्ग उदुम्बरविभीतकबिल्वशमीनां विहितानि विहितपुष्पपत्रालाभेन्येनापि निषिद्धवर्जितेन पूजा कार्य्या तदलाभे विहितपुष्पवृक्षीयपत्रैः तेषामप्यलाभे फलेन तदलाभे तृणगुल्मौषधितण्डुलजलैः तदलाभे मानसी पूजाकार्य्या। धूपास्तु–गुग्गुलु–सघृतमहिषाख्यगुग्गुलु–कृष्णागुरु–श्रीवास–सघृतबिल्व–अगुरु–कुंदुरु–देवदारु–सौगन्धिक–बिल्वकर्पूरागुरु–सर्ज्ज–महिषाख्यगुग्गुलु–साज्यदधित्थजा विहिताः।सक्षीरगुग्गुलुश्चामावास्यायां विहितः। चिन्तामणौ तु–सघृतगुग्गुलुरपि धूपे विहितः। दीपे घृतं विहितन्तैलन्निषिद्धम् नैवेद्यं मांसेतरं सामान्यप्रकरणे उक्तमेव विशेषतस्तु कृत्यप्रदीपे। गुडखण्डस्य घृतानाम्भक्ष्याणाङ्घृतपाचितानां वा निवेदने शतगुणफलं सुपक्वमातुलुङ्गादिदानेप्येतदेव फलम्। शिवस्तुतौ जपे च तदेवफलमुक्तम्। अथारात्रिका विद्यापतिठक्कुरकृतशिवसर्व्वस्वे–“करोत्यारात्रिकं यस्तु बहुभावपुरःसरः। प्राप्य ज्ञानम्प्रयाणान्ते गमिष्यत्यक्षयम्पदम्॥” आरात्रिका आरतिरिति

प्रसिद्धा एवञ्च अद्यप्रयाणकालोत्तरतत्त्वज्ञानप्राप्तिपूर्व्वकाक्षयपदगमनकामनया भगवतः शिवस्या रात्रिकमहङ्करिष्ये । इति संकल्पः कार्य्यं इति । अथ नमस्कारः–"प्रणम्य दण्डवद्भूमौ नमस्का रेण योर्च्चयेत् । स यां गतिमवाप्नोति न तत्क्रतुशतैरपि ॥" भविष्ये– "जानुभ्याञ्चैव पाणिभ्यां शिर सा च विचक्षणः । कृत्वा प्रणामं सर्व्वेशेसर्वान्कामानवाप्नुयात् ॥ तीर्थकोटिसहस्राणि तीर्थकोटिशता नि च । महादेवप्रणामस्य कलान्नार्हाति षोडशीम् ॥ गौडनिबन्धे–शिवपूजने मुख्वाद्यमतिप्रशस्तम् "गन्ध पुष्पनमस्कारैर्मुखवाद्यैश्च सर्वतः । योमामर्च्चयते तत्र तस्य तुष्याम्यहं सदा ॥" इति शिवपुरा णादिति । प्रयोगस्तु–अक्षतान्गृहीत्वा जलातिरिक्ते पूर्व्वोक्ताधारे ओं भूर्भुवःस्वर्भगवञ्छिव इहागच्छे इहतिष्ठेत्यावाह्य यथाधिकारम्मन्त्रमुच्चार्य्य तद्विना वा ओं शिवाय नम इति पाद्यादिभिः पूजयित्वा अर्द्धप्रदक्षिणीकृत्य प्रणम्य स्तुत्वा ध्यात्वा ओं भगवञ्छिव पूजितोसि प्रसीदेति प्रसाद्य स्वस्थानङ्ग च्छेति विसर्ज्जयेत् । ओं चण्डेश्वराय नम इति निर्म्माल्यन्त्यजेत् । दाक्षिणात्यनिबन्धे सिद्धान्तशे खरे–" धराहिरण्यगोरत्नताम्ररत्नांशुकादिकान् । विहाय शेषनिर्माल्यञ्चण्डेशाय निवेदयेत ॥" इत्याद्युक्त्वा " लिंगे स्वयम्भवे बाणे रत्नजे रसनिर्मिते । सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवे

त् ॥" इत्यभिहितं ततो नैवेद्यम्भस्माङ्गेभ्यः प्रतिपादयेदिति एतन्नैवेद्यस्याभक्ष्यत्वे पद्मपुराणीयशिव वाक्यम्–"अनर्हम्मम नैवेद्यम्पत्रम्पुष्पम्फलञ्जलम् । शालग्रामशिलालग्नं सर्व्वं याति पवित्रताम्॥" इति शूलपाणिः । स्मृतिदीपिकायां बाणलिङ्गनैवेद्यस्य भक्ष्यत्वमुक्तम् । बाणलिंगम्प्रकृत्यशिवनारद संवादे " ग्राह्याग्राह्यविचारोत्र शिवलिंगे न विद्यते । ' तन्नैवेद्यादिकङ्ग्राह्यमित्यर्थः । इतिशब्देन दा क्षिणात्यास्तु–शैवसौरनिर्म्माल्यनैवेद्यभक्षणे चान्द्रायणमित्युक्ता । "शालग्रामोद्भवे लिंगे बाणलिंगे स्वयम्भुवि । रसलिंगे तथार्षे च सुप्रसिद्धप्रतिष्ठिते ॥ हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्म्मिते । शिवदीक्षावता भक्तेनेदम्भक्ष्यमितीर्य्यते ॥ " तथा–"बाणलिंगे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शंभोर्न्नैवेद्यभक्षणम्॥ " इत्युक्त्वा " यत्र चण्डाधिकारोस्ति तद्भोक्तव्यन्न मानवैः । चण्डाधिकारो नो यत्र भोक्तव्यं तच्च भक्तितः ॥ " इत्युक्तवन्तः । लिंगद्वयमेककाले एकेन पुरुषेण नार्च्चनीयम् " गृहे लिंगद्वयन्नार्च्यं शालग्रामद्वयन्तथा । द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्य्यद्वयन्तथा ॥ शक्तित्रयन्तथा नार्च्यं गणेशत्रयमेव च । द्वौ शङ्खौ नार्च्चयेच्चैव भग्नाश्च प्रतिमान्तथा ॥ नार्च्चयेच्च तथा मत्स्यकूर्मादिदशकन्तथा । " इतिविष्णुधर्मोक्तोरित्युक्तवन्तश्च । गौडनिबन्धे बृहन्नारदीये–नमे

द्यः शूद्रसंस्पृष्टं लिंगं वा हरिमेव वा । स सर्वयातनाभोगी यावदाभूतसंप्लवम् ॥" इति पूजापङ्कज भास्करे शिवपूजाकथनन्नाम पंचदशः प्रकाशः ॥ १५ ॥

अथविष्णुपूजा । तत्प्रशंसा यथा अग्निपुराणे–येर्च्चयन्ति सदा विष्णुन्निश्चलेनान्तरात्मना । न ते भूयोभिजायन्ते श्वेतद्वीपनिवासिनः ॥ निवासिन इत्यस्य भवन्तीति शेषः । भविष्यपुराणे–"ये पूजयन्ति तन्देवं शङ्खचक्रगदाधरम् । वाङ्मनःकर्म्मभिः सम्यक्ते यान्ति परमम्पदम्॥" विष्णुपुराणे–भौमान्मनोरथान्स्वर्गं स्वर्गिवंद्यं तथापदम् । प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥" भौमान् ऐहिकान् । नरसिंहपुराणे–"ब्राह्मणाः क्षत्रिया वैश्यास्त्रियः शूद्रान्त्यजातयः । सम्पूज्य तं सुरश्रेष्ठम्भक्त्या सिंहवपुर्द्धरम् । मुच्यन्ते चाशुभैर्दुःखैर्ज्जन्मकोटिसमुद्भवैः ॥" तथा-नरके पच्यमानस्य यमेन परिभाषितम् । किंत्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ अलाभे चान्यद्रव्याणामुदकेनापि पूजितः । यो ददाति स्वकं लोकं स त्वया किन्न पूजितः"इति अनाश्रमिणाम्भगवत्पूजायान्नाधिकारः नरसिंहपुराणे–अनाश्रमित्वं गृहभङ्कारणं ततो गृहाणाश्रममुत्तमन्द्विज । अनाश्रमस्थैर्द्विज वेदपारगैः कृतन्त्वहन्नानुगृह्णामि चार्चनम् ॥ " इति भगवद्वाक्यात् । शालग्रामे भ

गवत्पूजातिप्रशस्ता वाराहे–कुड्ये लेख्ये च मे कश्चित्पटे कश्चित्तु मानवः । पूजयेद्यदि वा चक्रे मम ते जोंशसम्भवम् ॥ पद्मे मे पूजनं शस्तं शस्तं चैव तु स्थण्डिले । " इति भगवद्वाक्यात् । चक्रे शालग्रामशिलाभवे।विष्णुपूजाकल्पलतायाम्पौराणिकी गाथा–"शालग्रामशिला यत्र यत्र द्वारावती शिला। उभयोः सङ्गमो यत्र तत्र सन्निहितो हरिः ॥ येषान्नास्तीह वै मंत्रो न दीक्षा न विधिक्रमः । न तेषामपि बाधोस्ति शालग्रामशिलार्च्चनम् ॥ अगम्यागमने पापन्तथा विश्वासघातने। तत्सर्वन्नाशयत्याशु शालग्रामशिलार्च्चनम्॥"इत्यादि । लिङ्गपुराणे–"कामासक्तोपि यो नित्यम्भक्तिभावविवर्जितः । शालग्रामशिलाचक्रम्पूजयेत्सोच्युतो भवेत् ॥ लिङ्गकोटिसहस्रैस्तु पूजितैर्य्यत्फलं लभेत् । तत्फलङ्कोटिगुणितं शालग्रामशिलार्च्चने ॥ द्वादशेह शिला यो वै शालग्रामसमुद्भवाः । अर्च्चये द्वैष्णवो नित्यन्तस्य पुण्यं निबोध मे ॥ कोटिलिङ्गसहस्रैस्तु पूजितैर्ज्जाह्नवीतटे । काशीवासो युगान्यष्टौ दिनेनैकेन तद्भवेत्॥ततो बह्वीरर्च्चयेद्यः शालग्रामशिला नरः । नहि ब्रह्मादयो देवाः सङ्ख्याञ्जानन्ति तत्फले।" इत्यादिशिववाक्याच्च । गौडीयनिबन्धे पूजाधारमाह "शालग्रामे मणौ यन्त्रे स्थण्डिले प्रतिमादिषु । हरेः पूजा तु कर्त्तव्या केवले भूतले न तु॥" इति तदीयनिबन्धान्तरे–भागवतसम्मोहनतन्त्रयोः–"शैली दा

रुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ चलाचलेति द्वि विधा प्रतिष्ठा जीवमंदिरम्॥"तथा–"उद्वासावाहने न स्तः स्थिरायामुद्धवार्च्चने । अस्थिरायां विकल्पः स्यात्स्थंडिले च भवेद्द्वयम् ॥ " इति अस्यार्थः स्थिरत्वेन प्रतिष्ठापितायां शैलीप्रभृतिप्रतिमा यामर्च्चने उद्वासो विसर्ज्जनम् , आवाहनञ्च न स्यात् । अस्थिरायाञ्चलायां विकल्पः स च व्यवस्थितः शालग्रामादिशिलादौ स्वभावतो देवतासन्निधानात् कृतप्रतिष्ठासंस्कारकप्रतिमादौ च संस्कारेणदेवता सन्निधानाच्च प्रतिष्ठामुद्वासनञ्च न कुर्य्यात् । सैकत्यामल्पकालस्थायिन्याम्मूर्त्तौ च ते कुर्य्यादेव । स्थण्डिले तु द्वयम्भवेत् । प्रतिष्ठावाहने स्यातां वा न वेत्यर्थः । गृहादौ स्थण्डिले कुलदेवतामेकदा प्रतिष्ठाप्य पुनः प्रतिष्ठां विसर्ज्जनञ्च विनैव पूजयेत् । यज्ञादिग्रहवेद्यादौ ग्रहादिप्रतिष्ठाविसर्ज्जने भवेतामेवेति । ध्यानं तु–ध्येयः सदा सवितृमण्डलमध्यवर्त्ती " इत्यादिपुरुषसूक्तषोडशोपचारपू जायां वक्ष्यमाणञ्ज्ञेयम् । पूजामन्त्रस्तु–" ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदं समूढमस्यपांसु ले"।इति छन्दोगानाम् । ॐविष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोस्यूरसि विष्णोर्द्ध्रुवोसि वैष्णव मसि विष्णवे त्वा॥ " इति यजुर्व्वेदिनाम् । ॐ नमो नारायणायेति । ॐ नमो भगवते वासुदेवायेति

च द्विजातीनाम् । अर्घे नरसिंहपुराणम्—"आपः क्षीरङ्कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैव अर्घोऽष्टांगः प्रकीर्तितः ॥ अक्षताश्चात्रामतण्डुलाः । यत्तु । "न बिल्वैरर्चयेत्सूर्य्यन्न तुलस्या गणाधिपम् । नाक्षतैः पूजयेद्विष्णुन्न शिवं शङ्खवारिणा ।" इति वचनात्तन्निर्म्मूलंसमूलत्वेप्य घ्यातिरिक्तपरमिति शूलपाणिः । सिद्धार्थकाः सितसर्षपाः स चार्घः सतिसम्भवे शङ्खेन देयः गारुडे—शंखेनेत्युपक्रम्य "सपुष्पं वारिणा चार्घन्दूर्वाक्षतसमन्वितम् । यो दद्याद्वासुदेवस्य तस्य श्रीः सर्व्वतोमुखी ॥" इतिवचनात् । दक्षिणावर्त्तशङ्खस्तु अर्घादिदानेतिप्रशस्तः "दक्षिणावर्त्तशंखस्थतोयेन योर्चयेद्धरिम् । सप्तजन्मकृतम्पापन्तत्क्षणादेव नश्यति॥"इति गौडधृतस्कांदवचनात् । विद्याकरपद्धतौ प्रह्लादं प्रति भगवद्वाक्यम्— ॥ "वाद्यानामपि देवस्य तन्त्रीवाद्यं सदा प्रियम् । किं वादित्रसहस्रैस्तु पुरतो वै ममाग्रतः ॥ नागारिचिह्निता घण्टा प्राप्यते यदि कर्हिचित् । नागारिचिह्नितां घण्टां रथाङ्गेन समन्विताम् । वादयन्कुरुते नाशञ्जन्ममृत्युजरापदाम् ॥" तथा—यस्तु वादयते घण्टां वैनतेयेन संयुताम् । धूपे नीराजने स्नाने पूजने च विलेपने ॥ ममाग्रे लभते पुण्यञ्चान्द्रायणशतोद्भवम् । वैनतेयाङ्कितां घण्टां सुदर्शनसमन्विताम् ॥ ममाग्रे स्थापयेद्यस्तु तस्य देहे वसाम्य

हम् । ममनामाङ्किता घण्टा मत्पुरो यत्र तिष्ठति ॥ अन्तिके वैष्णवे गेहे तत्र मां विद्धि दैत्यज । मदी
यार्च्चनवेलायां घण्टावादं शृणोति यः । शाम्यन्ति तस्य पापानि शतजन्मार्जितान्यपि ॥ " विष्णोः
स्नानीयदाने शंखः प्रशस्तः विष्णुधर्म्मोत्तरे शंखमाहात्म्ये-"शंखस्थितेन तोयेन यः स्नापयति केशव
म् । कपिलानां सहस्रस्य दत्तस्य फलमाप्नुयात् ॥ " इति वचनात् । तथा विलेपयति देवेशं
शंखे कृत्वा तु चन्दनम् । परमात्मा पराम्प्रीतिङ्करोति शतवार्षिकीम् ॥ " तथा-तुलसीदल
लग्नेन चन्दनेन जनार्द्दनम् । विलेपयति यो नित्यं लभते चिन्तितम्फलम् ॥ " नित्य
चन्दनदानेपि गुणविधिरयम् । अथ पञ्चोपचाराः-तत्र गन्धद्रव्याणि श्रीखण्डचन्दन अगु
रु कर्प्पूर कुङ्कुम उशीर पद्मकाष्ठ कालेयक सिह्लकरक्तचंदनानि । अग्निपुराणे-" चंदनागुरुकर्प्पूर
कुङ्कुमोशीरपद्मकैः । अनुलिप्तोहरिर्भक्त्या वरान्भोगान्प्रयच्छति ॥ कालेयकन्तुरुष्कञ्च रक्तचंदनमे
व च । नृणाम्भवंति दत्तानि पुण्यानि पुरुषोत्तमे-इत्यभिधानात् । कालेयकङ्कृष्णागुरुः । तुरुष्कं
सिह्लकम् । गौडनिबंधे विष्णुधर्मोत्तरे-"दारिद्र्यं पद्मकङ्कुर्य्यादस्वास्थ्यं रक्तचन्दनम् । उशीरं चि
त्तविभ्रंशमन्ये कुर्य्युरुपद्रवम् ॥ " इति रक्तचंदननिषेध उक्तः स चाप्रामाणिकः अन्ये कुर्य्युरुपद्रवमि

त्युक्त्या विष्णौ चंदनदानाभावप्रसङ्गात्। तुलसीकाष्ठचन्दनं चास्यातिप्रियम् "यथा विष्णोः सदा हृद्यं नैवेद्यं शालिसम्भवम्। कापिलञ्च यथा क्षीरं तथा तुलसिचंदनम् ॥ यो यच्छति सदा विष्णौ तुलसीदारुचन्दनम्। स्वदेहे धारयेद्यस्तु सुराणां स यथा हरिः ॥" इति ब्रह्मांडपुराणे गरुडम्प्रति नारदवाक्यात्। श्रीदत्ताह्निके तु–कस्तूरिकाजातीफले च गन्धद्रव्ये उक्ते। हरिभक्तिदीपिकायान्तु। "यान्यात्मनः सदेष्टानि तानि शस्तान्युपाकुरु।" इति वचनादात्मेष्टमधिकमुक्तम्। अनुलेपानंतरञ्चामरैर्व्यजनैश्च वीजनङ्कुर्यात्। "ततो भगवतः कुर्यादनुलेपादनंतरम्। विद्वान्विचित्रैर्व्यजनैश्चामरैरपि वीजनम् ॥" इति वचनात्। गौडनिबंधे कालिकापुराणे–गंधो मलयजो यस्तु दैवे पित्र्ये च स स्मृतः। तत्पङ्को वा रसो वापि चूर्णो वा विष्णुतुष्टिदः ॥" तथा–" अनुलिप्तञ्जगन्नाथं तालवृंतेन वीजयेत्। वायुलोकमवाप्नोति पुरुषस्तेन कर्मणा॥" इत्यभिहितम्। पुष्पाणि तु–अगस्त्य अतिमुक्त अपराजिता अपामार्ग्ग अशोक गौडनिबंधधृत अङ्कोट अम्लान अवंती अष्टापद आम्रातक आम्रमञ्जरी सर्व्व वर्णोत्पल कदंब करञ्ज करवीर कर्णिकार किंशुक कुङ्कुम कुंद कुब्जक कुमुद कुरुंट कुरुबक कुश कूष्मांड कुसुंभ केतक खदिर चम्पक चारुपुट जवा जम्बू जया जाती गौडधृतश्वेतजवाप्रसिद्ध

जम्बूवनज तगर तिलक पीत श्वेतरक्तत्रिसंध्या तुलसी दमन द्रोण धावक नन्द्यावर्त्त नवमालिका नागकेशरनीपनेपालिका पद्म पाटला पारिभद्र पीतकस्वर्णजुहीप्रसिद्ध पीतिका पुन्नाग गौड धृत हरिद्रा प्रसिद्ध पिङ्गक पुङ्गवी प्रसिद्ध पुरंध्रीबंधूक बाण भृंगराज भूचंपक मदन मणिपुष्प मरुवक मल्लिका मालती गौडधृत मधुपिंगल मधुपिंडिका माषवृन्तक यूथी वक बकुल लवंग प्रसिद्ध वनज शतपत्र शतपुष्पिका शतङ्गा शतावरी शमी शाल शिरीषगौडनिबन्धधृतचुडिआ प्रसिद्ध शिखिनी श्वेतजवा शंश वाकसप्रसिद्ध सिंहास्य सेवंती सुवर्ण सौगंधिकानां विहितानि निषिद्धानि तु–अर्क्क कण्टकारीगौडधृत करवीरप्रसिद्ध क्रकर काञ्चनाल कुटज गौडधृत केतकी कृष्णजयन्तीगिरिकर्णिका श्वेता पराजिताप्रसिद्ध फिण्टी धत्तूर मंदार बिभीतकश क्रशाल्मलीगौडधृतशिरीषपुष्पाणि । अशोककरवीरकुंकुमकुशकुसुंभजलजत्रिसन्ध्यापलाशपाट लापारिभद्रशमीवर्ज्जरोहितपुष्पाणि सितसुरभिवज्र्जकण्टकीयपुष्पाणि च । केतकी नृसिंहेतरविष्णुमूर्तौ निषिद्धा काम्ये च केतकीद्वयंविहितम् । पत्राणि तु–अपामार्ग्गआमलकीकुशकेतकीगौडधृतकुम्भी खदिरभृङ्गरजभृङ्गराजमरुवकवकबिल्वशमीगौडीयशेफालीसर्व्ववनस्पतीनां विहितानि । धूपास्तु–स

शर्करसाज्यमहिषाख्यगुग्गुलुजटामासीगुग्गुलुदेवदारुसिह्लकसागुरुकर्प्पूरनखीजातीफलसकर्प्पूरकृष्णा गुरुसाज्यसगन्धगुग्गुलुरूपा विहिताः । " महिषाख्यं गुग्गुलुम् आज्ययुक्तं सशर्करम् । धूपन्ददाति राजेन्द्र नरसिंहाय भक्तिमान् । स धूपितः सर्व्वदिक्षु सर्व्वपापविवर्जितः । अप्सरोगणयुक्तेन विमानेन विराजता । वायुलोकं समासाद्य विष्णुलोके महीयते॥" वामनपुराणे–"हिरुकाख्यङ्कणन्दारुसिह्लकं सागुरुं सितम् । शंखञ्जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ॥ " इत्यभिधानाच्च । हिरुकाजटामासी । कणो गुग्गुलुविशेषः । सागुरु इत्यगुरुसहितः । सितः कर्प्पूरः । शङ्खं नखी । स्कन्दपुराणे–" ये कृष्णागुरुणा कृष्णन्धूपयन्ति कलौ नराः । सकर्प्पूरेण राजेन्द्र कृष्णतुल्या भवन्ति ते ॥ साज्येन गुग्गुलेनापि सगन्धेन जनार्द्दनम् । धूपितेन नरो याति पदम्भूप सदाशिवम् ॥ " इत्यभिधानाच्च । कस्तूरिकातिरिक्तजीवजातधूपो विष्णवे न देयः । " न धूपार्थे जीवजातम् " इति विष्णुनाभिधानात् । विष्णुधर्म्मे–" विना मृगमदन्धूपे जीवजातं विवर्ज्जयेत् । न यक्षधूपं वितरेन्माधवाय कदाचन ॥" इत्युक्तेश्च । दीपे घृतं तिलतैलं वा देयम् " घृतेन वापि तैलेन दीपं यो ज्वालयेन्नरः । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥ विहाय सकलम्पापं सहस्रादित्यस

न्निभः। ज्योतिष्मता विमानेन विष्णुलोके महीयते ॥" इति नरसिंहपुराणात्। कर्प्पूरदीपदानेऽश्वमे धः कुलोद्धारश्च फलम् "प्रज्वाल्य देवदेवस्य कर्प्पूरेण तु दीपकम्। अश्वमेधमवाप्नोति कुलञ्चैव स मुद्धरेत् ॥" इति कालिकापुराणात्। "नैवेद्यानि तु भक्ष्यभोज्यादीनि सामान्यप्रकरणे उक्तानि। विशेषतस्तु कृत्यप्रदीपे-फलेषु बदर खर्ज्जूरआमलकीप्राचीनामलकआम्रपनसपुन्नागबीजपूरकूष्मा ण्डतालकदलकर्कटीपटोलद्वयानि। अन्नेषु-हविःसंस्कृतयवगोधूमशालितिलमुद्गव्रीहिमाषकुलित्था अन्यान्यपि यज्ञियान्यन्नानि विहितानि। वामनपुराणे-" हविषा संस्कृता ये च यवगोधूमशाल यः। तिलमुद्गादयो माषा व्रीहयश्च हरेः प्रियाः॥" इत्युक्तेः। मुद्गादय इत्यादिपदेनायज्ञियमसूरादि व्यावृत्तशस्यग्रहणम्। अयज्ञिया अपि माषाः पृथगुपादानाद् ग्राह्याः। कुलत्थाश्च वराहपुराणेऽभि धानादिति श्रीदत्ताह्निकम्। दधिदुग्धघृतानि तु गव्यानि विहितानि। गव्यान्यपि अनिर्दशा या विवत्साया अन्यवत्सायाः स्यन्दिन्या यमप्रसूतवत्या अमेध्यभुजश्च निषिद्धानीति कृत्यप्रदीपः। " नाभक्ष्यन्नैवेद्यार्थे भक्ष्येष्वप्यजामहिषीक्षीरे " इति विष्णुवचनात्, माहिषञ्चाविकञ्चाजमयज्ञियमु दाहृतमिति। वराहपुराणाच्च अजामहिषीमेषीदधिदुग्धघृतानि निषिद्धानि। मांसेषु-हरिण छाग शश

रुरु तृणमयूर लावक वर्त्तक हारीत टिट्टिभ कुरर वनकपोत मांसानि पक्कानि विहितानि। पञ्चनखम त्स्यवराहमांसानि न देयानि। मृडालमूलशाकचुञ्चुशाकतिन्तिडीशाकानि विहितानीति कृत्यप्रदीपः। वस्त्रन्तु–दुकूलपट्टकौशेयवार्क्षकार्प्पासानि विहितानि " दुकूलपट्टकौशेयवार्क्षकार्प्पासकादिभिः। वासोभिः पूजयेद्देवङ्कुसुमैरात्मनः प्रियैः॥ इत्यग्निपुराणेभिधानात्। नीलं रक्तञ्च निषिद्धम्। विष्णुपूजामुपक्रम्य " न वासो नीलरक्तम्" इति विष्णुनाभिधानात्। रक्तमित्यस्य दद्यादिति शेषः। पीतम्प्रशस्तम्। अग्निपुराणे–" योगपीठं समभ्यर्च्य समावाह्य हरिं यजेत्। पाद्यार्घाचमनीयञ्च पीतवस्त्रं विभूषणम्॥" इत्यभिधानात्। गौडनिबन्धे कालिकापुराणे–"कार्प्पासं सर्व्वतो भद्रन्दद्यात्सर्वेभ्यएव तु। नैकान्तरक्तन्दद्यात्तु वासुदेवाय चेलकम्॥" तथा–" तत्पूर्व्वम्पूजयित्वैव मन्त्रैर्देवाय चोत्सृजेत्। निर्दशम्मलिनञ्जीर्णञ्छिन्नङ्गात्रावलिङ्गितम्॥" परकीयञ्चाखुदष्टं सूचीविद्धन्तथोषितम्। उप्तकेशं विधूतञ्च श्लेष्ममूत्रादिदूषितम्॥" उप्तकेशं केशेन सह वापितम्। तथा–" वर्ज्जयेत्स्वोपयोगेन यज्ञादावुपयोजने। पताकाध्वजवस्त्रादौ स्यूतं वस्त्रं निवेदयेत्॥" इत्युक्तं स्मृतिदीपिकायाम्। स्कन्दपुराणे–" गीतं वाद्यञ्च नृत्यञ्च तथा पुस्तकवाचनम्। पूजाकाले तु विप्रेन्द्र सर्व्वदा केशवप्रि

यम् । गीतनृत्याद्यभावेपि कुर्य्यात्पुस्तकवाचनम् । पूजाकाले मुक्तिदस्य गीताध्यायमनुस्मृतम् ॥ पञ्च स्तवम्महाराज महाप्रीतिकरं हरेः । स्तोत्राणाम्परमं स्तोत्रं विष्णोर्न्नामसहस्रकम् ॥ हित्वा स्तोत्रसह स्राणि पठनीयम्महामुने । तेनैकेन मुनिश्रेष्ठ पठितेन सदा हरिः ॥ प्रीतिमायाति देवेशो युगकोटिश तानि च । विहाय गीतवाद्यानि पूजाकाले सदा हरिः । परिपूर्णं भवत्याह सहस्राख्यानकीर्तनात् ॥” इत्यादिवचनात्पुस्तकवाचनम्पूजाकालेवश्यंविधेयम् । पुस्तकवाचनम्पुराणश्रवणन्तत्पाठश्च । पञ्च स्तवं गीत नृत्य वाद्य पुस्तकवाचनं गीताध्यायपाठश्चेति पञ्चकम् विहाय अनादृत्य । कीर्त्तनात्पूर्णं सर्व्वम्भवतीत्याह हरिः । गानं स्तोत्रस्य गीतस्य वा । गौडनिबन्धे–“ ततश्च मूलमन्त्रेण दत्त्वा पुष्पाञ्जलित्रयम् । महानीराजनङ्कुर्य्यान्महावाद्यजयस्वनैः ॥ प्रज्वालयेत्तदर्थञ्च कर्पूरेण घृतेन वा । आरात्रिकं शुभे पात्रे विषमानेकवर्त्तिकम् ॥ ” इति । तन्माहात्म्यं स्कान्दे ब्रह्मनारदसंवादे–“ब हुवर्त्तिसमायुक्तञ्ज्वलन्तङ्केशवोपरि । कुर्य्यादारात्रिकं यस्तु कल्पकोटिं वसेद्दिवि ॥ कर्प्पूरेण तु यः कुर्य्याद्भक्त्या केशवमूर्द्धनि । आरात्रिकम्मुनिश्रेष्ठ प्रविशेद्विष्णुमव्ययम्॥” तत्रैव--शिवोमासंवादे “म न्त्रहीनङ्क्रियाहीनं यत्कृतम्पूजनं हरेः । सर्व्वं सम्पूर्णतामेति कृते नीराजने शिवे ॥ ” इत्यभिहितम् ।

विष्णवे देयमात्रदाने विष्णुधर्म्मोत्तरे–"अक्षयो भगवान्विष्णुः परमात्मा सनातनः । तमुद्दिश्य च यद्द त्तमक्षयन्तत्प्रकीर्तितम्॥" इतिदर्शनात् । ब्राह्मणसम्प्रदानकतत्तज्जातीयवस्तुदानजन्यफलसमाक्षयफल प्राप्तिस्वर्ग्गलोकगमनकामनया तत्तद्वस्तुभगवते देयम् । कामनाविरहे तु महाफलमुक्तन्तत्रैव–" अका मश्चैव यो लोको यत्किञ्चिद्विनिवेदयेत् । तेनैव स्थानमाप्नोति यत्र गत्वा न शोचति ॥ धर्म्मवाणि जका मूढाः फलकामा नराधमाः । अर्च्चयन्ति जगन्नाथन्ते कामान्प्राप्नुवन्त्यथ । अन्तवत्तु फलन्तेषा न्तद्भवत्यल्पचेतसाम् ॥ " तथा–" पद्भ्याम्प्रतीच्छते देवः स कामेन निवेदितम् । मूर्द्ध्ना प्रतीक्षते दत्तमकामेन द्विजोत्तमाः ॥ " इति । देवपित्रादिदत्तञ्च विष्णवे न देयम् " अपि दीपावलोकम्मे नोपयु ञ्ज्यान्निवेदितम् । " इत्यादिभागवतात् । निवेदितमन्यदेवादिभ्यः । तथा चान्यनिवेदितं विष्णवे न दद्यादित्यर्थः । अस्य पूजाप्रयोगस्तु–तिलान्गृहीत्वा यथोक्तरूपं विष्णुन्ध्यात्वा ओंभूर्भुवःस्वर्भ गवन्विष्णो इहागच्छेत्यावाह्य इह तिष्ठेति स्थापयित्वा पूर्व्वोक्तमन्त्रमुच्चार्य्य एतानि पाद्यार्घाचमनी यस्नानीयपुनराचमनीयानि । ओं विष्णवे नमः इदमनुलेपनमिति, एष गन्धः इति वा । ओं वि ष्णवे नमः एते यवतिलाः । ओं विष्णवे नमः एतानि पुष्पाणि, इदम्पुष्पं वा । ओं विष्णवे नम

इति त्रिः एतानि तुलसीपत्राणि। ओं विष्णवे नमः एवम् एष धूपः एष दीपः एतानि नैवेद्यानि इदन्नै वेद्यं वा। ओं विष्णवे नमः इदमाचमनीयम्। ओं विष्णवे नमः इति पूजयित्वा दीक्षितो जप्त्वाऽ दीक्षितस्तु जपमकृत्वैव प्रदक्षिणाचतुष्टयं विधाय प्रणम्य स्तुत्वा ध्यात्वा ॐ भगवन् विष्णो पूजि तोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छेति विसर्ज्जयेदिति। ततः ॐ विष्वक्सेनाय नमः इतिनिर्म्माल्यं क्षिप्त्वा पादोदकम्पीत्वा पादोदकेन शिरः सम्माज्र्ज्य नैवेद्यम्भक्षयेत्। अथ पुरुषसूक्तेन विष्णुपू



जा—“ जलदेवन्नमस्कृत्य ततो गृह गतः पुमान्। विधिना पुरुषसूक्तेन तत्र विष्णुं समर्च्चयेत्। वैश्वदेवन्ततः कुर्य्याद्बलिकर्म्म यथाविधि॥” इति नरसिंहपुराणदर्शनात्। पुरुषसूक्तेन विष्णुपूजा कार्या तत्र क्रमः—पूजोपयु क्तवस्तूनि सन्निधाप्याऽभिषिच्य नर सिंहपुराणोक्तं ध्यायेत् ध्यानं यथा— “ ध्येयः सदा सवितृमण्डलमध्य वर्ती नारायणः सरसिजासनसन्निवि ष्टः। केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥” इति। सदा पूजाकाले जपकाले च सवितृमण्डलपदं तेजःसमूहोप

लक्षकम् । सरसिजासनसन्निविष्टः । पद्मासनोपविष्टः पद्मोपर्य्युपविशन्नुपविष्ट इति केचित् । मकर कुण्डलवानिति दाक्षिणात्याः पठन्ति । अत्र शंखेत्याद्युपलक्षणम् । तेन दक्षिणकरद्वये ऊर्द्ध्वाधःक्रमेण पद्म शंखौ वामकरद्वये ऊर्द्ध्वाधःक्रमेण गदाचक्रे इति तात्पर्य्यम् । "ततो नारायणं ध्यायेदेकाग्रमनसा स्थितः । पद्मशंखगदाचक्रपाणिना दिव्यभूषितम् ।" इति पूजानन्तरविष्णुवचनसंवादात् । दिव्यभूषितं मनोहरहारकेयूरकिरीट कनककुण्डलालङ्कृतजलदनीलङ्कनकाभं वा हृत्पुण्डरीके रविमण्डले वा पद्मासनोपविष्टन्ध्यायेदितितदर्थः । अत्रेदं बोध्यं—हृत्पुण्डरीकं रविमण्डलञ्च सर्व्वासामपि देवतानां स्थानम् " अप्स्वग्नौ हृदये सूर्य्ये " इत्याद्यभिधानादिति । पूजाक्रममाह तत्रैव—"आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता । पुरुषो यो जगद्बीजमृषिर्न्नारायणः स्मृतः ॥ आद्ययावाहयेदेवमृचा तु पुरुषोत्तमम् । द्वितीययासनन्दद्यात्पाद्यञ्चैव तृतीयया ॥ चतुर्थ्यार्घ्यम्प्रदातव्यं पञ्चम्याचमनीयकम् । षष्ठ्या स्नानम्प्रकुर्वीत सप्तम्या वस्त्रमेव । च यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च । दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् ॥ द्वादश्या दीपकं दद्यात्त्रयोदश्या चरुन्तथा । चतुर्दश्याञ्जलिङ्कृत्वा पञ्चदश्या प्रदक्षिणाम् ॥ षोडश्योद्वासनङ्कुर्य्याच्छेषकर्म्माणि पूर्व्ववत् । स्नाने वस्त्रे च नैवेद्ये दद्यादा

चमनीयकम् ॥ षण्मासात्सिद्धिमाप्नोति देवदेवं समर्च्चयन् । दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एववा॥ अर्च्चितं स्याज्जगदिदन्तेन सर्व्वञ्चराचरम् ॥ एतत्पठेत्केवलमेव सूक्तन्दिने दिने भावितकृष्णबुद्धिः । स सर्व्वदुःखानि विहाय वैष्णवं पदम्प्रयात्यच्युततुष्टिकृन्नरः॥ पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः॥"अत्र दिने दिनभावितकृष्ण बुद्धिरित्यस्य प्रकर्षकाष्ठाम्प्राप्ता भगवति प्रीतिप्रापिता तज्जननानुकूलीकृता कृष्णविषयिणी बुद्धिर्ग्ये नेत्यर्थः । अत्र च दिने दिने इत्यभिधानात्तदनुकल्पविधानाच्च नित्याधिकार इत्यवसीयते । स्नाने इत्यादि षष्ठ्या स्नानानन्तरं सप्तम्या वस्त्रदानानन्तरं त्रयोदश्या चरुदानानन्तरञ्च ततो विराडिति पञ्चम्याचमनीयन्दद्यादित्यर्थः । न चाचमनीयस्य पुनरावृत्त्या षोडशोपचारत्वबाधः उपचारैक्य प्रयोजकाचमनीयत्वैकोपाध्यालिङ्गितत्वादाधिक्याभावात् । शेषकर्म्माणीति प्रयातु भगवान् पुनरागमनाय पुनःसन्दर्शनाय च इति वाच्यमित्यर्थ इति बहवः । अस्मिँश्च कल्पेऽग्नि पुराणे यद्यप्यङ्गन्यासविधिरुक्तः तथापि स काम्य इति तं विनापि पुरुषसूक्तेन नित्यपूजा विधेया । तथाचाग्निपुराणम्—प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे । तृतीयां वामपादे तु चतुर्थीं

न्दक्षिणे तथा ॥ जानुनोः पञ्चमीं वामे षष्ठीन्तु दक्षिणे तथा । सप्तमीं वामकट्यान्तु अष्टमीन्दक्षिणे तथा ॥ नवमीन्नाभिमध्ये तु दशमीं हृदये तथा । एकादशीङ्कण्ठमध्ये द्वादशीं वामबाहुके ॥ त्रयोदशीन्दक्षिणे तु तथास्ये च चतुर्दशीम् । अक्ष्णोः पञ्चदशीञ्चैव विन्यसेन्मूर्ध्नि षोडशीम् ॥ यथा देहे तथा देवे न्यासङ्कुर्य्याद्विचक्षणः । न्यासेन तु भवेत्सोपि स्वयमेव जनार्दनः । एवं न्यासविधिङ्कृत्वा पश्चाद्यागं समाचरेत् ॥ " इति । अथैतत्प्रयोगः—वामादिकरद्वयचरणद्वयजानुद्वयकटिद्वयनाभिहृदयकण्ठबाहुद्वयमुखचक्षुर्म्मूर्द्धसु प्रत्येकमेकैकामृचं स्वस्य देवस्य च देहे विन्यस्य यथोक्तन्ध्यात्वा सहस्रशीर्षेत्यादिषोडशर्चस्य पुरुषसूक्तस्य नारायण ऋषिराद्याः पञ्चदशानुष्टुभोन्त्या त्रिष्टुब्जगत्सिजम्पुरुषो देवता विष्णवर्च्चने पुरुषस्तुतौ वा विनियोगः इति ऋष्यादिकं स्मृत्वा । "ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्" । ॐ भगवन्विष्णो इहा गच्छ १ । "ॐ पुरुष एवेदꣳ सर्व्वय्यँद्भूतय्यँच्च भाव्यम् । उतामृतत्त्वस्येशानो यदन्नेनाति रोहति ॥" इदमासनमत्र तिष्ठ २ । "ॐ एतावानस्य महिमातोज्यायाँश्च पूरुषः । पादोस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ " इदम्पाद्यम् ३ । ॐ विष्णवे नमः "ॐ त्रिपादूर्द्ध्व उदैत्पुरुषः पादोस्येहाभव

त्पुनः । ततो विष्वंव्यक्रामत्साशनानशने अभि॥" एषोर्घः ४ । ॐ ततो विराडजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥" इदमाचमनीयम् ५ । "ॐ तस्माद्यज्ञात्सर्व्व हुतः सम्भृतम्पृषदाज्यम्।पशूँस्ताँश्चक्रे वायव्यानारण्याग्राम्याश्च ये॥"इदं स्नानीयम्६। ततस्ततो विराडिति पूर्व्ववदाचमनीयदानम् "ॐ तस्माद्यज्ञात्सर्व्वहुत ऋचः सामानि जज्ञिरे । छंदाᳬसि जज्ञिरेद्वी तस्माद्यजुस्तस्मादजायत ॥" इदं वस्त्रम् ७ । अत्रापि पूर्व्ववदाचमनीयदानम् । "ॐ तस्मादश्वा अजायन्त येकेचोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥" इमे यज्ञोपवीते ८। अत्रापि पूर्व्ववदाचमनीयदानम्। "ॐ तय्यँज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः । तेन देवा अयजन्त साद्ध्याऋषयश्च ये ॥" एष गन्धः ९ । तत एते यवतिलाः । ॐ यत्पुरुषँव्विदधुः कतिधाव्व्यकल्पयन्। मुखङ्किमस्यासीत्किम्बाहू किमूरू पादा उच्येते ॥" इदम्पुष्पम् १० इति । त्रिः पूजयेत् । "ॐ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्याᳬशूद्रो अजायत ॥" एष धूपः ११ । ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ " एष दीपः १२ । " ॐ नाभ्या आसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्त्तत पद्भ्याम्भूमि

दिशः श्रोत्रात्तथालोकाँ २ ॥ ऽ। अकल्पयन् ॥ ” एषचरुः १३ इदं नैवेद्यमिति वा। अत्रापि व्वपूर्व
दाचमनीयदानम् । “ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसंतोस्यासीदाज्यंग्रीष्म
इध्मः शरद्धविः ॥ ” इति पठित्वाञ्जलिङ्कुर्य्यात् १४। “ओं सप्तास्यासन्परिधयस्त्रिःसप्तसमि
धः कृताः। देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषम्पशुम् ॥ ” इति प्रदक्षिणङ्कुर्य्यात् १५। “ओं य
ज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। ते ह नाकम्महिमानः सचन्त यत्र पूर्व्वे सा
ध्याः सन्ति देवाः॥” १६। इति पठित्वा ओं भगवन्विष्णो क्षमस्वेति विसर्ज्जयं ओं प्रयातु भगवन्पु
नरागमनाय पुनः सन्दर्शनाय चेति वदेदिति। एतदशक्तौ पुरुषसूक्तम्पठित्वा पुष्पाणि जलं वा दद्या
त्। श्रीकृष्णानुस्मरणपूर्व्वकम्पाठमात्रं वा कुर्य्यात् । पुरुषसूक्तानन्तरन्नरसिंहपुराणम्-“अनेन विधि
ना देवः पूज्यते मधुसूदनः। वेदज्ञैरेव नान्यैस्तु तस्मात्सर्व्वहितं वद ॥ ” इतिप्रश्नानन्तरम् “अ
ष्टाक्षरेणमन्त्रेण नरसिंहमनामयम्। गन्धपुष्पादिभिर्न्नित्यमच्युतम्पूजयेन्नरः ॥ गन्धपुष्पादिसकलमने
नैव निवेदयेत्। अनेनाभ्यर्च्चितो विष्णुः प्रीतो भवति तत्क्षणात् ॥ ” इत्यभिधानादष्टाक्षरेणवेदम
न्त्रानभिज्ञैस्त्रैवर्णिकैस्स्त्रीशूद्रैश्च पूजा विधेया अन्यथा सर्वहितत्वानुपपत्तेः। अत्र केचित्-गन्धपु

ष्पादिभिरित्यभिधानाद्गन्धपुष्पादिकमेवोपचारमिच्छन्ति तन्न पूर्वोक्तषोडशोपचारात्मकेऽर्च्चने प्रतीयमाने मन्त्रान्तरसम्बन्धमात्रपरत्वाद्वाक्यस्थं किञ्चार्च्चनं सम्प्रवक्षामीति प्रक्रमादेकस्यैव षोडशोपचारात्मकस्यार्च्चनस्य मन्त्रभेदाद्भिन्नं प्रकारद्वयमिति युक्तं तस्माद्गन्धपुष्पादिभिरित्यादिशब्दः प्रकारे प्राधान्याद्गन्धपुष्पयोर्व्यपदेश इति छन्दोगाह्निकम् । अत्र चायं विशेषः–"नमोनारायणायेति मन्त्रः सर्व्वार्थसाधकः ।" इतिनरसिंहपुराणोक्तसप्ताक्षरे प्रणवमादौ पठित्वा अष्टाक्षरत्वमुपपाद्य त्रैवर्णिकैः पूजादौ कार्य्ये पठनीयः । स्त्रीशूद्रैस्तु नामित्यादौ दत्त्वाक्षरङ्कृत्वा नान्नारायणाय नम इति पठनीयः अत एव पञ्चरात्रे–" ओंकारांशबहिर्भावेणैव नारायणपदादिभूतबिन्दुमद्बीजेनाष्टाक्षरत्वमुक्तमिति श्रीदत्ताह्निकम् । आगमे तु–प्रणवस्थाने ओमिति चतुर्थं सन्ध्यक्षरं स्त्रीशूद्राणाम्पठनीयमाह । अत्र च कल्पे न्यासादिकन्नास्ति प्रमाणाभावात् किन्तु मूलमन्त्रेणैवावाहनासनपाद्यार्घाचमनीयस्नानीययज्ञोपवीतवस्त्रगन्धपुष्पधूपदीपनैवेद्याञ्जलिप्रदक्षिणविसर्ज्जनात्मकषोडशोपचारान् कृत्वा नैवेद्यप्रतिपत्तिं कुर्य्यात् । जपोप्यस्यातिप्रशस्तः " किन्तस्य बहुभिर्म्मन्त्रैः किन्तस्य बहुभिर्ज्जपैः । नमो नारायणायेति मन्त्रः सर्व्वार्थसाधकः ॥ स्नात्वा शुचिर्ज्जपेद्यस्तु नमो नारायणं शतम् । स

याति परमन्देवन्नारायणमनामयम् ॥" इति नरसिंहपुराणदर्शनात् । "एकान्ते विजने स्थाने विष्णवग्रे वा जलान्तिके । जपेदष्टाक्षरम्मन्त्रञ्चित्ते विष्णुन्निधाय वै ॥ आयुष्यधनपुत्रांश्च पशून्विद्याम्महद्यशः । धर्म्मार्थकाममोक्षांश्च लभते जपकृन्नरः ॥" इति दर्शनाच्च । तत्रेयञ्जपेतिकर्त्तव्यता—अष्टाक्षरस्यमन्त्रस्य नारायणऋषिर्गायत्रीछन्दः परमात्मा देवता चतुर्व्वर्गसिद्ध्यर्थे जपेविनियोगः इति ऋष्यादीन् स्मृत्वा पूर्व्वोक्तान्नारायणमूर्त्तिन्ध्यात्वा "शुक्लवर्णञ्च ॐकारन्नकारं रक्तमुच्यते । मोकारं वर्णतः कृष्णन्नाकारं रक्तमुच्यते ॥ राकारङ्कुङ्कुमाभंतु यकारम्पीतमुच्यते । णाकारमञ्जनाभंतु यकारम्बहुवर्णकम् ॥ इति वचनबोधितवर्णविशिष्टान् वर्णान् ध्यायन् अष्टाधिकं सहस्रं शतन्दशवारं वा जपेत् "सहस्रं वा शतं वापि दशवारानुदिनञ्जपेत् । कुर्य्यादष्टाधिकन्तेषामयञ्जप्ये विधिः स्मृतः ॥" इति विद्याकरधृतवचनात् अथ प्रदक्षिणं स्कन्दपुराणे—"अर्घंकृत्वा तु शंखे यः प्रकरोति प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥" इति । पूजाकल्पलतायाम्—"प्रदक्षिणं ये कुर्व्वन्ति भक्तियुक्तेन चेतसा । न ते यमपुरीं यान्ति यान्ति पुण्यकृताङ्गतिम् ॥" विष्णुधर्म्मे—रुक्ममाषकदानस्य फलं विप्राः पदेपदे । यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ तानि तानि प्रणश्यंति प्रदक्षिणपदेपदे ॥ इति "तत्सर्व्वं

नश्यते विष्णोरिति पाठान्तरम् । त्रिः प्रदक्षिणे वामनपुराणम् ॥ त्रिः प्रदक्षिणमावृत्य सहाष्टाङ्गप्रणामकम् । दशाश्वमेधस्य फलम्प्राप्नुयान्नात्र संशयः ॥ " इति । चत्वारि केशवे कुर्य्यादिति वचनबोधितप्रदक्षिणचतुष्टये तु पुरुषार्थचतुष्टयलाभः फलमिति शूलपाणिः। अथ नीराजनं गौडनिबंधे—"ततश्च मूलमंत्रेण दत्त्वा पुष्पाञ्जलित्रयम् । महानीराजनङ्कुर्य्यान्महावाद्यजयस्वनैः ॥ प्रज्वालयेत्तदर्थञ्च कर्प्पूरेण घृतेन वा । आरात्रिकं शुभे पात्रे विषमानेकवर्त्तिकम् ॥" स्कांदे—बहुवर्त्तिसमायुक्तञ्ज्वलन्तङ्केशवोपरि । कुर्य्यादारात्रिकं यस्तु कल्पकोटिं वसेद्दिवि ॥ कर्प्पूरेण तु यः कुर्य्याद्भक्त्या केशवमूर्द्धनि । आरात्रिकं सुरश्रेष्ठ प्रविशेद्विष्णुमव्ययम् ॥ अथ नमस्कारः तत्र नरसिंहपुराणे—"नमस्कारः स्मृतो यज्ञः सर्व्वयज्ञेषु चोत्तमः । नमस्कारेण चैकेन अष्टाङ्गेन हरिं व्रजेत् ॥ उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्याङ्कराभ्याञ्जानुभ्याम्प्रणामोष्टाङ्ग इष्यते ॥" इति। विष्णुधर्म्मोत्तरे—"जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः । कृत्वा प्रणामन्देवस्य सर्व्वान्कामानवाप्नुयात् ॥ परमाणूनि यावन्ति ललाटे पुरुषस्य तु । पार्थिवानि भवंतीह नमतो मधुसूदनम् । तावन्त्यब्दानि विप्रेन्द्राः स्वर्ग्गलोके महीयते ॥" इत्यादि । गौडनिबंधे—कैर्द्धृताञ्जलिभिर्न्नेमुरिति भागवती

यात् शिरोऽञ्जलिसँयोगोपि नमस्कारः । कलौ नमस्कारमन्त्रो भागवते"–ध्येयं सदा परिभवघ्नमभीष्टदोहन्तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम् । भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्म्मिष्ठ आर्य्यवचसा यदगादरण्यम् । मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम् ॥ २ ॥ एवंयुगानुवृत्तिभ्या म्भगवान् हरिरीश्वरः । मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ " तथा–"शिरोमत्पादयोः कृत्वा बाहुभ्याञ्च परस्परम् । प्रसन्नम्पाहिमामीश भीतम्मृत्युमहार्णवात् ॥ इति भगवद्वाक्यम् । ब्रह्मपुराणे- यत्किञ्चित्क्रियते देव मयासुकृतदुष्कृतम् । तत्सर्व्वन्त्वयि विन्यस्तन्त्वत्प्रयुक्तः करोम्यहम् ॥" इत्यनेन सर्व्वं समर्प्पयेदित्युक्तम् । अथ विसर्ज्जनं तत्र मन्त्रो भागवते--"विधिहीनमहीनं वा यत्किञ्चिदुपपादितम् । क्रियामन्त्रविहीनं वा तत्सर्व्वङ्क्षन्तुमर्हसि ॥ मन्त्रहीनङ्क्रियाहीनं भक्तिहीनञ्जनार्द्दन । यत्पूजितम्मया देव परिपूर्णन्तदस्तु मे ॥ गच्छ गच्छे परं स्थानम्पुराणपुरुषोत्तम । यत्र ब्रह्मादयो देवा विशन्ति परमम्पदम् ॥ अपराधसहस्रं यत्क्रियतेहर्निशम्मया । दासोयमितिमाम्मत्वा क्षमस्व मधुसूदन ॥" इति । अथ पादोदकधारणमाहात्म्यं विष्णुधर्म्मो

त्तरे-शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् । स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ॥ " इति । स्कान्दे-अकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकम्पुण्यं शिरसा धारयाम्यहम् ॥ " इति धारणमन्त्रोयम् । पाने तूदरे धारयाम्यहमित्यूहः कार्य्यः । "हृदिरूपम्मुखे नाम नैवेद्यमुदरे हरेः । पादोदकञ्च निर्म्माल्यम्मस्तके यस्य सोच्युतः ॥ बिभर्त्ति मूर्द्ध्ना निर्मार्ल्यङ्केशवार्च्चाधृतन्तु यः । अनिवेद्य न चाश्नाति तस्य तुष्यति केशवः ॥" इति विष्णुधर्म्माभिधानात् । दाक्षिणात्यनिबंधे-एतन्निर्म्माल्यन्देवदत्तम्भावयित्वाशिरसिधारयेत् शंखोदकं शिरसि धृत्वा देवतीर्थम्पूजांते वैश्वदेवांते वा शिरसि धार्य्यं पेयञ्च । तत्रक्रमः-विप्रपादोदकम्पीत्वा विष्णुपादोदकम्पिबेत् । शालग्रामशिलातोयमपीत्वा यस्तु मस्तके ॥ प्रक्षेपणञ्च कुरुते ब्रह्महा स निगद्यते । पात्रान्तरेण वै ग्राह्यन्न करेण कदाचन ॥" इति कमलाकर इति । गौडनिबंधे-"निर्म्माल्यम्मस्तके धार्य्यं सर्व्वाङ्गेष्वनुलेपनम् । नैवेद्यमुपभुञ्जीत दत्त्वा तद्भक्तिशालिने ॥" तद्भक्तिशालिने विष्वक्सेनाय । कालिकापुराणे "यो यद्देवार्च्चनरतः स तन्नैवेद्यभक्षकः ।" ब्रह्मपुराणे-"अम्बरीषनवंव्वस्त्रम्फलमन्यद्रसादिकम् । कृत्वा कृष्णोपभोग्यन्तु सदा सेव्यं तु वैष्णवैः ॥ " तत्रैककर्त्तरि क्वाश्रवणात् स्वदत्तनैवेद्यभक्षणेप्यधिकार

उक्तः केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत् । विष्णुयामले–"पीत्वा पादोदकन्देवि नैवेद्यं स्वयमुद्ध रेत् । त्यजेत्पादोदकं यस्तु नैवेद्यं वा त्यजेच्च यः॥षष्टिवर्षसहस्राणि रौरवे नरके पचेत्॥"उद्धरेत् अभ्य वहरेत्।एतेन अन्यदेवस्य नैवेद्यम्भुक्त्वा चान्द्रायणञ्चरेत् इति यद्वचनन्तदेकान्तवैष्णवपरमिति भूषणः । यत्तु शूद्रान्नं याजकान्नञ्च नैवेद्यञ्चापि वर्ज्जयेत् इति लैङ्गवचनन्तन्नैवेद्यत्वेनोपकल्पितानिवेदितपरम् । लोभादिना भोजननिषेधकं वा । यथोक्तं शाम्बे–"नोपभुक्त्वा च नैवेद्यम्प्रयाति प्रेतयोनिषु । विसर्ज्जना त्पूर्व्वं विष्णुनैवेद्योपादाननिषेधकं वा । अर्व्वाक्विसर्ज्जनाद्रव्यं सर्व्वं नैवेद्यमुच्यते । विसर्जिते जग न्नाथे निर्म्माल्यम्भवति क्षणात् ॥" इति गरुडपुराणीयसंज्ञाकरणस्य एतत्प्रयोजनकत्वात् । विसर्जिते पूजने समापिते इति भूषणइति । निर्म्माल्यन्तु–ॐ विश्वक्सेनाय नम इति निवेद्य तथा नद्यादौ क्षिपे द्यथा न कोपि लङ्घयेत् । नरसिंहनिर्माल्यलङ्घनाद्भ्रष्टदिव्यरथारोहणशक्तिं शान्तनुम्प्रति–" अतः परन्तु निर्म्माल्यं मा लङ्घय महीपते । नरसिंहस्य देवस्य तथाऽन्येषान्दिवौकसाम् ॥" इति नारदवा क्यात् । इति शूलपाणिः । दाक्षिणात्यास्तु–" विश्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम् । पादोद कम्प्रसादञ्च लिङ्गे चण्डेश्वराय तु ॥" इत्युक्तवन्तः । अथ वराहपुराणोक्तविष्णोरपराधाः–क्षत्रियसिद्धा

न्नभोजनम् १। अनिषिद्धदिने दन्तकाष्ठमकृत्वा विष्णोरुपसर्प्पणम् २। मैथुनङ्कृत्वाऽस्नात्वा विष्णोः प्रतिमादिस्पर्शनम् ३। शवन्दृष्ट्वाऽस्नात्वा विष्णुकर्म्मकरणम् ४। रजस्वलां स्पृष्ट्वाऽस्नात्वा विष्णुस्पर्शनम् ५। शवं स्पृष्ट्वाऽस्नात्वा विष्णुसन्निधाववस्थानम् ६। विष्णुं स्पृशतः पायुवायुत्यागः ७। विष्णोः कर्म्म कुर्व्वतः पुरीषत्यागः ८। विष्णुशास्त्रमनादृत्य शास्त्रान्तरप्रशंसा ९। अतिमलिनं वासः परिधाय विष्णुकर्म्माचरणम् १०। अविधानेनोपस्पृश्य विष्णुस्पर्शनम् ११। विष्णोरपराधङ्कृत्वा विष्णोरुपसर्प्पणम् १२। क्रुद्धस्य विष्णुस्पर्शनम् १३। निषिद्धपुष्पेण विष्णोरर्च्चनम् १४। रक्तं वासः परिधाय विष्णोरुपसर्प्पणम् १५। अन्धाकारे विना दीपेन विष्णोः स्पर्शनम् १६। कृष्णवस्त्रम्परिधाय विष्णोः कर्म्माचरणम् १७। वायसोद्गतवस्त्रम्परिधाय विष्णोः कर्म्माचरणम् १८। विष्णवे कुक्कुरोच्छिष्टदानम् १९। वाराहमांसम्भुक्त्वा विष्णोरुपसर्प्पणम् २०। जलपादम्भुक्त्वा विष्णोरुपसर्प्पणम् २१। दीपं स्पृष्ट्वा हस्तमप्रक्षाल्य विष्णोः कर्म्माचरणम् २२। श्मशानङ्गत्वाऽस्नात्वा विष्णोरुपसर्प्पणम् २३। पिण्याकम्भुक्त्वा विष्णोरुपसर्प्पणम् २४। विष्णवे वराहमांसनिवेदनम् २५। मद्यमादाय स्पृष्ट्वा पीत्वा वा विष्णुगृहप्रवेशनम् २६। परकीयेणाशुचिना वस्त्रेण परिहितेन विष्णुकर्म्मा

चरणम् २७। विष्णवे नवान्नमप्रदाय तद्भोजनम् २८। गन्धपुष्पे अप्रदाय धूपदानम् २९। उपानहा वारुह्य विष्णुस्थानप्रवेशनम् ३०। भेरीशब्देन विना विष्णोः प्रबोधनम् ३१। अजीर्णे सति विष्णो रुपसर्प्पणमिति ३२। एतदपराधक्षमापनन्तु गीताध्यायपाठः पङ्कजपुष्पैर्व्विष्णुपूजनञ्च। नारसिंहे– "अतः प्रभृति निर्म्माल्यम्मालङ्घय महीपते। नरसिंहस्य देवस्य तथान्येषान्दिवौकसाम्॥ अहन्यहनि यो मर्त्यो गीताध्यायन्तु सम्पठेत्। द्वात्रिंशदपराधैश्च अहन्यहनि मुच्यते॥ अपराधसहस्राणि अपराधशतानिच। पद्मैनैकेन देवेशः क्षमते हेलयार्च्चितः॥" इत्यभिधानात्। स्मृत्यालोके तु-"एते द्वात्रिंशदाख्याता अपराधाः फलैः सह। विष्णोरभ्यर्च्चनं सम्यगमीषाम्मार्ज्जनं विदुः॥" इत्युक्तम्॥ इति पूजापङ्कजभास्करे विष्णुपूजाकथनन्नाम षोडशः प्रकाशः॥ १६॥ एवंदेवषट्कं सम्पूज्य तद्भिन्नस्येष्टदेवतात्वे तां पूजयेत् तत्रायं विशेषः– यस्यागमोक्तकल्पे दीक्षा स तेन कल्पेन पूजयेत्। यस्य तु पञ्चरात्रोक्तकल्पे दीक्षा स तेन कल्पेन देवषट्कान्यतमस्येष्टदेवतात्वे तु स्वदीक्षोक्तकल्पेन पूजया तन्त्रेणैव शिवम्भास्करमित्यादिवच नबोधितनित्यपूजापि निर्व्वहतीति गौडाः। शिष्टास्तु–देवषट्कान्यतमस्येष्टदेवतात्वेपि पृथक्स्वे

ष्टदेवताम्पूजयन्ति । तत्र पञ्चगौडा आगमोक्तामेव दीक्षां गृह्णन्तीति । आगमोक्तेष्टदेवतासामान्यपूजापद्धतिः क्वचित्सप्रमाणा क्वचित्तु विस्तरभिया प्रमाणरहितापि महामहोपाध्यायगोविन्दठक्कुरकृतपूजाप्रदीपमहामहोपाध्यायदेवनाथठक्कुरकृततंत्रकौमुदीमंत्रमहोदधितंत्रसाराद्यनुसारेण लिख्यते—तत्र देवतापूजागृहद्वारमागत्य यथोक्तासन उपविश्य दक्षिणहस्तस्य तर्ज्जन्यां राजतमङ्गुलीयकमनामिकायां सौवर्णमङ्गुलीयकञ्च विध्रियात् वरदातन्त्रे प्रथमपटले—"पूजाकाले सर्व्वदैव कुशहस्तो भवेच्छुचिः । तर्ज्जन्यां रजतन्धार्य्यं स्वर्णन्धार्य्यमनामया॥ कुशकार्य्यकरं यस्मान्न तु वन्याः कुशाः कुशाः। कुशेन रहिता पूजा विफला कथिता मया ॥ नान्यस्य रजतं स्वर्णन्धार्य्यं हि निजमङ्गले।" इत्यभिधानात् । तत आचामेत् तत्प्रकारस्तु—मूलेन त्रिरपः पीत्वा करम्प्रक्षाल्य द्विरोष्ठौ च प्रक्षाल्य तर्ज्जन्यंगुष्ठाभ्याम्मुखं स्पृशेत् ताभ्यामेव नासिके च अनामिकांगुष्ठाभ्यान्नेत्रे कर्णौ च स्पृष्ट्वा कनिष्ठांगुष्ठाभ्यान्नाभिं तलेन हृदयञ्च सर्व्वांगुलीभिर्म्मस्तकमंसौ च स्पृशेत् ततः सामान्यार्घङ्कुर्य्यात् तद्यथा—स्ववामे रक्तचंदनसिन्दूरपटवासान्यतमेन । त्रिकोणं वृत्तञ्चतुरस्रं भूबिम्बञ्च विलिख्य ॐ आधारशक्तये नम इति गंधादिभिः सम्पूज्य फडिति

मंत्रेणार्घपात्रम्प्रक्षाल्य साधारमर्घपात्रन्तत्र निधाय नम इति पठन् जलेनापूर्य्य तत्र "ॐ गङ्गेच यमुने चैव गोदावरि सरस्वति। नर्म्मदे सिन्धु कावेरि जलेस्मिन्सन्निधिङ्कुरु ॥" इति मंत्रेण क्रोमित्यङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थान्यावाह्य प्रणवेन गंधादींस्तत्र निःक्षिप्य धेनुमुद्राम्प्रदर्श्यतज्जलं स्पृशन् दशधाऽष्टधा वा मूलमंत्रञ्जपेदिति तंत्रसारः। अत एव भैरवतंत्रे–"तत आचमनङ्कृत्वा सामान्यार्घम्प्रकल्पयेत्। त्रिकोणवृत्तभूबिम्बमण्डलं रचयेत्ततः ॥ आधारशक्तिं सम्पूज्य तत्राधारंविनि क्षिपेत्। अस्त्रेण पात्रं संशोध्य हृन्मंत्रेणच पूरयेत् ॥नि क्षिपेत्तीर्थमावाह्य गंधादीन्प्रणवे न तु दर्शयेद्धेनुमुद्रां वै सामान्यार्घविधिः स्मृतः ॥सामान्यार्घेण देवेशि पूजयेदिष्टदेवताः॥" इत्युक्तम्। पूजाप्रदीपेतुप्रणवेन पुष्पादिकन्तत्र निःक्षिप्य फडिति शोधयित्वा तज्जलं स्पृशन्मूलमन्त्रन्त्रिर्ज्जप्त्वा धेनुमुद्राम्प्रदर्शयेदित्यभिहितम्। मूलमन्त्रस्तु–तत्तद्देवताकतत्तन्मन्त्रः उपचारदाने विशिष्टमन्त्राज्ञाने प्रणवादिचतुर्थ्यन्तनमोन्ततत्तद्देवतानामापि। तन्त्रकौमुद्याम्–"उपचारप्रदानेषु विशिष्टो नास्ति चेन्मनुः। ताराद्यां ङे समायुक्तनमोन्तान्देवताभिधाम्। समुच्चरेदयम्मन्त्रो मूलादिः परिकीर्त्तितः ॥ " इति। अर्घादिपात्रन्तन्त्रकौमुद्यां तत्त्वसागरे–" हैरण्यं राजतन्ताम्रङ्कांस्यम्पालाशपत्रकम्। रत्नोद्भवं शङ्खजं वा

पद्मपत्रमथापि वा । पात्रमष्टविधम्प्रोक्तं सर्व्वसिद्धिकरम्परम्॥"इति। ततः पात्रान्तरेणोद्धृतेन तज्जलेन फडिति मन्त्रेण द्वारमभ्युक्ष्य गृहद्वारदेवताः पुष्पतोयाभ्याम्पूजयेत् तद्यथा—मन्त्रमहोदधौ-ऊर्द्ध्वोदुम्बरे मध्ये ओं गणेशायनमः १। दक्षे ओं महालक्ष्म्यै नमः २। वामे ओं सरस्वत्यै नमः ३। पुनर्दक्षिणशाखायाम् ओं विघ्नेशाय नमः ४। ओं गङ्गायै नमः । ओं यमुनायै नमः । वामे ओं क्षेत्रपालाय नमः। ओं गङ्गायै नमः। ॐ यमुनायै नमः। पुनर्दक्षे ॐ धात्रे नमः। वामे ॐ विधात्रे नमःपुनर्दक्षे ॐ शङ्खनिधये नमः। वामे ॐ पद्मनिधये नमः। इति पूजयित्वा देहल्याम् ॐ अस्त्राय नम इति। पूजाप्रदीपे तूर्णापद्धतौ " द्वारस्य दक्षिणे वामे गणेशञ्च सरस्वतीम् । ऊर्द्ध्वोदुम्बरके मध्ये तयोर्द्वारश्रियं यजेत् ॥ ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्यतः । तयोः पार्श्वगते गङ्गायमुने पुष्पवारिभिः ॥ धातारञ्च विधातारं शङ्खपद्मनिधीन्तथा। देहल्यामर्च्चयेदस्त्रम्प्रतिद्वारमिति क्रमात् ॥ " दक्षिणवामशाखयोः क्रमेण गङ्गायमुने पूजनीये तदुक्तन्तत्रैव—"गङ्गाञ्चयमुनान्तद्वद्दक्षसव्यन्तु शाखयोः ।" इत्युक्त्वा द्वारोर्द्ध्वशाखायां दक्षिणशाखोपरिविघ्नेशन्तत्रैव मध्ये महालक्ष्मीन्तत्रैव वामशाखोपरि सरस्वतीं पुष्पतोयाभ्यां सम्पूज्य दक्षिणशाखायां विघ्नेशं वामशाखायाङ्क्षेत्रपालञ्च पूजयेत् ।

ततो दक्षिणवामशाखयोः क्रमेण गङ्गायमुने पूजनीये एवन्धात्रादयोपि विघ्नेशस्य क्षेत्रपालस्य च दक्षिणवामपार्श्वयोः क्रमेण गङ्गायमुने एवन्धातृविधात्रोः पार्श्वयोः शङ्खनिधिपद्मनिधिदेहल्यामस्त्रञ्च पूजयेदिति केचित् । ततस्तत्तद्देवताया द्वारपालम्पूजयेदित्यभिहितम् । तन्त्रसारेतु–धातृविधातृशङ्खनिधिपद्मनिधीनान्पूजा नोक्ता । अशक्तश्चेत्पुष्पाक्षतवारिभिरेकदैव ॐ द्वारदेवताभ्यो नम इति पूजयेत् । ततो दक्षिणपादपुरःसरन्द्वारस्य वामशाखां स्पृशन् स्वदक्षिणाङ्गं सङ्कोचयन् पूजागृहान्तः प्रविश्य ॐ वास्तुपुरुषाय नमः ॐ ब्रह्मणे नम इति पूजयेत् । तथाचागमविवेके–" ततो वामाङ्गसङ्कोचदक्षपादपुरःसरः । पूजायामण्डपस्यास्य प्रवेशः समुदाहृतः ॥ नैर्ऋत्यान्दिशि वास्त्वीशम्ब्रह्माणञ्च समर्च्चयेत् । " इति तत आसनोपवेशनात्पूर्वमासनोपवेशनानन्तरं वा मूलमन्त्रेण दिव्यदृष्ट्यवलोकनेन दिव्यान्विघ्नान् ॐ अस्त्राय फडिति मन्त्रेण जलेनान्तारिक्षगान् विघ्नान् वामपार्ष्णिघातत्रयेण भौमान्विघ्नांश्चोत्सार्य्य "लाजचन्दनसिद्धार्थभस्मदूर्व्वाङ्कुराक्षताः विकिरा।इति सन्दिष्टाः सर्वविघ्नौघनाशकाः॥" इति वचनबोधितविकिरान् फडति सप्तवाराभिमन्त्रितान् गृहीत्वा "ॐअपसर्प्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ " इति मन्त्रे

ण दिक्षु विकिरेत्। ततोक्षतमादायास्त्रमन्त्रेण नाराचमुद्रया गृहान्तरविघ्नानुत्सारयेत्। तत ॐ ह्रीं आधारशक्तिकमलासनाय नमः इत्यासनङ्गन्धादिना सम्पूज्य आसनमन्त्रस्य मेरुपृष्ठऋषिः सुतलञ्छन्दः कूर्म्मो देवता आसनपरिग्रहणे विनियोगः "ॐपृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वञ्च धारय माम्भद्रे पवित्रङ्कुरु चासनम्॥"इति पठित्वा स्वस्तिकादिक्रमेणोपविशेत् इति तन्त्रसारः। पूजाप्रदीपे तु—द्वारपालपूजामुक्त्वा दिव्यदृष्ट्यवलोकनेन दिव्यान् विघ्नान् अस्त्रमन्त्रेण जलक्षेपेणान्तरिक्षगान् ॐ अपसर्प्पन्तु ते भूता इत्यादिमन्त्रंपठित्वा फडिति नाराचास्त्रबुद्ध्या सिद्धार्थाक्षतकुसुमानि मण्डपान्तः प्रक्षिप्य पार्ष्णिघातत्रयन्दत्त्वा भौमान्विघ्नांश्चोत्सार्य्य वामशाखान्दक्षिणांशेन स्पृशन् दक्षिणाङ्घ्रिणा देहलीं विलंघ्याङ्गं सङ्कोचयन् मण्डपम्प्रविशेत्। ततो नैर्ऋत्यान्दिशि वास्त्वीशम्ब्रह्माणञ्चाभ्यर्च्य पञ्चगव्यार्घतोयाभ्याम्मण्डपम्प्रोक्ष्य। "ॐ तीक्ष्णदंष्ट्रमहाकाय कल्पान्तदहनोपम। भैरवाय नमस्तुभ्यमनुज्ञान्दातुमर्हसि॥" इति भैरवानुज्ञाङ्गृहीत्वा चतुर्भिः संस्कारैर्म्मण्डपं शोधयेत्। तद्यथा—मण्डपम्मूलमन्त्रेण वीक्ष्य फडिति प्रोक्ष्य फडिति कुशैस्ताडयित्वा हूमित्यभ्युक्षेत्। ततो मण्डपञ्चन्दनागुरुकर्प्पूरैर्द्धूपयित्वा कुशाजिनकम्बलोत्तरं विहितमासनंवेदिकायां वि

न्यस्य जलेनाभ्युक्ष्य तत्रासने आधारशक्तिप्रकृतिकूर्म्मानन्तपृथिवीः सम्पूज्य आसनमन्त्रस्येत्याद्य भिहितवान्। ततः पञ्चगव्येन मण्डपम्परिशोधयेत् । ततः स्वदक्षिणे अर्घपाद्याचमनीयमधुपर्कपात्राणि गन्धपुष्पादींश्च स्थापयेत् वामपार्श्वे अम्बुपूर्णपात्रञ्छत्रं व्यजनमादर्शञ्चामरन्ताम्बूलञ्च स्थापयेत् पृष्ठदेशे हस्तप्रक्षालनार्थम्पात्रं स्थापयेत् सर्व्वदिक्षु घृतप्रदीपाँश्च स्थापयित्वा कृताञ्जलिः सन् वामे ॐ गुरुभ्यो नमः ॐ परमगुरुभ्यो नमः ॐ परात्परगुरुभ्यो नमः ॐ परमेष्ठिगुरुभ्यो नमः दक्षिणे ॐ गणेशाय नमः मध्येऽमुकदेवतायै नमः इति प्रणमेत् । ततः फडिति मन्त्रेण गन्धपुष्पाभ्यां करौ संशोध्य ऊर्द्ध्वोर्द्ध्वतालत्रयन्दत्त्वा छोटिकाभिर्दशदिग्बन्धनङ्कुर्य्यात् । ततोरमिति जलधारया वह्निप्राकारञ्चिन्तयेत् इति तन्त्रसारः।पूजाप्रदीपे तु–मध्ये दुर्ग्गाप्रणामानन्तरम्पश्चात् क्षेत्रपालन्नमस्कृत्य ॐ सहस्रारहुम्फडिति रक्षां विधाय सुगंधिपुष्पमर्द्दन हस्तौ सुरभीकृत्य तत्पुष्पन्नाराचमुद्रयोत्तरतः क्षिप्त्वा फडिति करौ संशोध्य ऊर्ध्वोर्ध्वतालत्रयन्दत्त्वाऽस्त्रमुद्रया दिग्बन्धनङ्कुर्य्यात् इत्युक्तम् अथ भूतशुद्धिः–तत्प्रकारस्तु मंत्रमहोदधौ स्वांके उत्तानौ हस्तौ कृत्वा मूलाधारे स्थितां बिसतंतुनिभां विद्युत्प्रभां कुण्डलीम्परदेवतां हुङ्कारोत्थध्वनिना प्रबुद्धाम्मूलाधारस्वाधिष्ठानमणिपूरकानाहताख्यानि

चत्वारि चक्राणि भित्त्वा सुषुम्णावर्त्मना हृद्गतां स्मृत्वा हृदम्बुजस्थितम्प्रदीपकलिकाकारञ्जीवमादाय विशुद्धाज्ञाख्ये द्वे चक्रे भित्त्वा ब्रह्मरंध्रगतां स्मरेत् । ततोहंसमंत्रेण जीवम्ब्रह्मणि सँय्योज्य पादादिजानुपर्य्यन्तञ्चतुष्कोणम् लमिति भूबीजाढ्यं सवज्रकंपीतवर्णम्भूमण्डलञ्जान्वादिनाभिपर्यन्तमर्द्धचंद्रनिभं श्वेतम् वमिति वरुणबीजाढ्यं पद्मद्वयाङ्कितञ्जलमण्डलन्नाभेर्हृदयपर्य्यन्तन्त्रिकोणं रमिति वह्निबीजाढ्यं स्वस्तिकांकितं रक्तवर्णं वह्निमण्डलं हृदो भ्रूमध्यपर्य्यन्तं वर्तुलंषड्बिंदुलांच्छितम् यमिति वायुबीजाढ्यं धूम्रवर्णं वायुमण्डलम्भ्रूमध्याद्ब्रह्मरंध्रपर्य्यन्तं वर्त्तुलं स्वच्छं हंबीजाढ्यङ्गगनमण्डलञ्च विचिन्त्य गंधरसरूपस्पर्शशब्दैः नासिकाजिह्वाचक्षुस्त्वक्श्रोत्रैः वाक्पाणिपादपायूपस्थैश्च क्रमेण युतानि विभाव्य ततः समानोदानव्यानापानप्राणान् धरादिमण्डलगतान् पञ्चवायून् स्मरेत् एषु च पञ्चसु मण्डलेषु तत्तदीशान् क्रमेण ब्रह्मविष्णुशिवेशानसदाशिवान् ध्यात्वा निवृत्तिप्रतिष्ठाविद्याशांतिशांत्यतीतेति पञ्चकला अपि धरादिगताः स्मरेत् ततो भुवञ्जले जलंवह्नौ वह्निंवायौ वायुमाकाशे आकाशमहङ्कारेऽहङ्कारम्महत्तत्त्वे महान्तम्प्रकृतौ प्रकृतिमात्मनि विलापयेत् ततः शुद्धसच्चिन्मयो भूत्वा दक्षकुक्षिस्थितमङ्गुष्ठपरिमितम्ब्रह्महत्याशिरोयुक्तं कनकस्तेयबाहुकं मदिरापान

हृदयं स्वर्णस्तेयकटीयुतं पापिसंयोगिपादयुगलमुपपातकरोमाणं खड्गचर्मधर दुष्टमधोवक्त्रन्दुःसह ङ्कृष्णम्पापपुरुषं विचिन्त्य यमिति बीजं षोडशवारं जपन् वायुना शरीरं सम्पूर्य्य स्वशरीरयुतमेनं विशोध्य रमित्यग्निबीजञ्चतुःषष्टिवारञ्जपन् तदुत्थेन वह्निना स्वशरीरयुतम्पापपुरुषङ्कुंभकेन दग्ध्वा यमिति वायुबीजन्द्वात्रिंशद्वारञ्जपन् पापनरोद्भवम्भस्म पृथक्कृत्य बहीरेचयेत् । ततो वमिति सुधाबीजं स्मरन् ललाटे चंद्रन्नीत्वाच चंद्रमण्डलाद्गलितामृतेन स्वदेहोत्थम्भस्म सम्प्लाव्य लमिति भूबीजेन घनीकृत्य कनकाण्डकारं विचिन्त्य विशुद्धमुकुरसन्निभं विचिन्त्य हमित्या काशबीजं स्मरन् मूर्द्धादिपादपर्य्यन्तन्तान्यंगानि विरचयेत् । ततश्चैतन्यादाकाशादीनि भू तान्युत्पाद्य परसंगात्सुधामयजीवं सोहमिति मंत्रेण समादाय हृदयाम्बुजे संस्थाप्य मूलाधारगता ङ्कुण्डलीं स्मरेत् अस्या आवश्यकत्वमाह यामले-"भूतशुद्धिं लिपिन्यासं विना यस्तु प्रपूजयेत् । विपरीतफलन्दद्यादभक्त्या पूजनं यथा ॥" इति । पूजाप्रदीपे तु-हृत्पद्मकर्णिकास्थन्दीपशिखानिभ ञ्जीवात्मानं हंस इति मन्त्रेण सुषुम्णावर्त्मना मस्तकोपरि सहस्रदलकमलावस्थिते परमात्मनि सँयोज्य आकाशवायुतेजोजलपृथिवीश्रोत्रत्वक्चक्षूरसनघ्राणमुखपाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्ध

वचनादानगतिविसर्गानन्दात्मकपञ्चविंशतितत्त्वानि परमात्मनि बीजभावेन व्युत्क्रमाल्लीनानि विचिन्त्य वामनासापुटे यमिति वायुबीजं धूम्रं वायुमंडलस्थं विचिन्त्य नाभिचक्रस्थवायुमण्डलावस्थितवायुना ऐक्यं विभाव्य पूरकङ्कृत्वा कुम्भके वामकुक्षिस्थकृष्णवर्णपापपुरुषेण सह शुष्कं शरीरं विचिन्त्य दक्षिणनासापुटेन वायुं रेचयेत् ततो दक्षिणनासापुटे रमिति वह्निबीजं रक्तवर्णं वह्निमण्डलस्थं लीनमारुतं विचिन्त्य हृदयस्थवह्निमण्डलावस्थितवह्निना ऐक्य विभाव्य पूरके वह्निपूर्णं शरीरं विचिन्त्य कुम्भके दग्धश्चिन्तयित्वा वामनासापुटेन भस्मना सह वायुं रेचयेत् ततो वामनासापुटे ठमिति चन्द्रबीजं श्वेतञ्जलमण्डलस्थं विचिन्त्य सहस्रपत्रकमलस्थजलमण्डलस्थामृतेन एकीभूतं सम्भाव्य पूरके ठमिति बीजं ललाटचन्द्रं नीत्वा कुम्भके वमित्यमृतबीजेन वर्णमयीश्चन्द्रादमृतवृष्टिन्निपात्य दोषजातं विश्लेषयन् दिव्यं शरीरमुत्पाद्य आपादतलमस्तकममृतेनाप्लाव्य दक्षिणनासापुटेन वायुं रेचयेत् पूरके षोडशमात्रया कुम्भके चतुःषष्टिमात्रया रेचकेद्वात्रिंशन्मात्रया तत्तन्मन्त्रजपः। ततस्तत्त्वानि स्वस्वस्थानानि नीत्वा जीवात्मानं परमात्मनः सकाशात् सोहमिति मंत्रेणत्हृदयाम्बुजमानयेदिति।

तथा च सारसमुच्चये—"संयोज्य जीवमथदुर्गममध्यनाडीमार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे। हंसेन देहम

मरेन्द्रपुरोगतेन सार्द्धेन्दुनाभसितसाद्विदधीत बुद्ध्या ॥" इति। अमरेन्द्रपुरोगतेन लकारप्रथमेन रेफे णेत्यर्थः। तंत्रान्तरे तु–"सुषुम्णावर्त्मनात्मानम्परमात्मनि योजयेत्। योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः॥ कारणे सर्व्वभूतानां तत्त्वान्यपि च चिन्तयेत्। बीजभावेनलीनानि व्युत्क्रमात्परमा नि॥" इति सोहंमंत्रेणयोजनमुक्तम्। सोहमिति चिन्मन्त्रः अत एव तत्र हंसमंत्रेणानयनमुक्तम् एवञ्च सोहम्मंत्रेण योजनम् हंसमन्त्रेणानयनम् हंसमंत्रेण योजनम् सोहम्मंत्रेणानयनमित्युभयमपि प्रामाणिकमेवेत्याहुः। अशक्तस्तु मूलाधारोत्थितकुण्डलिन्या हृद्वर्त्तिजीवात्मानं हंस इति मंत्रे ण ब्रह्मरन्ध्रस्थपरमशिवे संयोज्य सोहमिति मंत्रेण जीवपरमात्मनोरैक्यं विचिन्त्य तस्माद्ब्रह्मणः प्रादुर्भूतं शरीरं भावयेदिति। इति भूतशुद्धिः। अथ प्राणस्थापनम्–अस्य प्राणप्रतिष्ठामन्त्रस्याजे शपद्मजा ऋषयः। ऋग्यजुःसामानि छन्दांसि प्राणशक्तिर्देवता। आँ बीजम्। ह्रीं शक्तिः। क्रों कील कम्। प्राणस्थापने विनियोगः। शिरसि ब्रह्मविष्णुमहेश्वरेभ्य ऋषिभ्यो नमः। मुखे ऋग्यजुःसामभ्य श्छन्दोभ्यो नमः। हृदि प्राणशक्त्यै देवतायै नमः। गुह्ये आँ बीजाय नमः। पादयोः ह्रीं शक्तये नमः। सर्व्वांगे क्रों कीलकायनमः। इति ऋष्यादीन्विन्यस्य ङंकंखंघंगं नमो वाय्वग्निजलभूम्यात्मने हृदया

य नम इति हृदि । ञंचंछंझंजं शब्दस्पर्शरूपरसगन्धात्मने शिरसे स्वाहा इति शिरसि । णंटंठंढंडं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखायै वषडिति शिखायाम् । नंतंथंधंदं वाक्पाणिपादपायूपस्थात्मने कवचाय हुमिति बाह्वोः । मंपंफंभंबं वक्तव्यादानगमनविसर्गानन्दात्मने नेत्रत्रयाय वौषडिति नेत्रयोः । शंयंरंवंलंहंषंसंळं बुद्धिमनोऽहंकारचित्तात्मने अस्त्राय फट् ततो नाभ्यादिपादाग्रान्तम् । आं नमः कण्ठादिनाभ्यन्तम् ह्रीं नमः मूर्द्धादिकण्ठान्तं क्रों नमः ततो लेलिहानमुद्रयाहृदयंस्पृशन्यं त्वगात्मनेनमः रं असृगात्मने नमः लं परमात्मने नमः बं मेदआत्मने नमः शं अस्थ्यात्मने नमः षं मज्जात्मने नमः सं शुक्रात्मने नमः हौं ओजआत्मने नमः हं प्राणात्मने नमः सं जीवात्मने नमः इतियादीन्न्यसेत् । ततो यंरंलंवंशंषंसंळंक्षं हौंहंसः इत्यनेन मूर्द्धादिपादांतं व्यापकं कुर्य्यात् । इति प्राणप्रतिष्ठां विधाय मातृकान्यासङ्कुर्य्यात् । अस्यावश्यकत्वमाह फेत्कारिणीतन्त्रे- " मन्त्रा मूकत्वमायान्ति विन्यासेन विना लिपेः । सर्व्वमन्त्रप्रसिद्ध्यर्थंन्तस्मादादौ लिपिं न्यसेत् ॥ " इति । तत्प्रकारो यथा–अस्य मातृकामन्त्रस्य ब्रह्मऋषिर्गायत्रीछंदो मातृका सरस्वती देवता हलो बीज नि स्वराः शक्तयः अव्यक्तं कीलकं लिपिन्यासे विनियोगः देहशुद्धौ विनियोग इति प्रदीपः । शिरसि ॐ

ब्रह्मणे ऋषये नमः । मुखे ॐ गायत्रीछंदसे नमः । हृदि ॐ मातृकासरस्वत्यै नमः । गुह्ये हल्भ्यो बीजेभ्योनमः पादयोः स्वरेभ्यः शक्तिभ्यो नमः । सर्व्वांगे अव्यक्ताय कीलकाय नमः । इति न्यस्य ततः करांगन्यासः—अंकंखंगंघंङंआं अङ्गुष्ठाभ्यान्नमः । इंचंछंजंझंञंईं तर्ज्जनीभ्यां स्वाहा । उंटंठंडंढंणंऊं मध्यामाभ्यां वषट् । एंतंथंदंधंनंऐं अनामिकाभ्यां हुं । ॐ पंफंबंभंमंऔं कनिष्ठिकाभ्यां वौषट् । अंयंरंलंवंशंषंसंहंळंक्षं अः करतलकरपृष्ठाभ्यां फट् । करन्यासेपि अङ्गुष्ठाभ्यान्नम इत्यादिस्थानेषु हृदयाय नमः इत्यङ्गुष्ठयोः । शिरसेस्वाहा इति तर्ज्जन्योः । शिखायै वषडिति मध्यमयोः। कवचायहुम् इत्यनामिकयोः । नेत्रत्रयाय वौषडिति कनिष्ठयोः । अस्त्राय फडिति करतलयोर्व्विन्यसेदिति पूजाप्रदीपः—"षडंगानि विधेयानिजातियुक्तानि देशिकैः । अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदंगैः सजातिभिः।। अस्त्रन्तु तलयोर्न्यस्य कुर्य्यात्तालत्रयन्ततः॥दिशस्तेनैव बध्नीयाच्छोटिकाभिः समाहितः।हृदयादिषु विन्यस्येदङ्गमन्त्रांस्ततः सुधीः।।"हृदयाय नमः पूर्व्वं शिरसे वह्निवल्लभा।शिखायै वषडित्युक्तं कवचाय हुमीरितम् ॥ नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ॥षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ॥ पञ्चाङ्गानि मनोर्न्यस्य तत्र नेत्रमनुं त्यजेत् । अङ्गहीनस्य मंत्रस्य स्वेनैवाङ्गानि कल्पयेत् ॥" जात

यश्च–" नमः स्वाहा वषट् हुञ्च वौषट् फट्कार एव च । जातिषट्कमिति प्रोक्तं हृदयाद्यस्त्रसंयुतम् ॥"
इति कारणागमोक्तेः । तत एवमेव हृदयादिन्यासं कुर्य्यात् । ततोन्तर्म्मातृकान्यासः तद्यथा–अका
रादिषोडशस्वरान् सबिन्दून् षोडशदलकमले कण्ठमूले न्यसेत् । ककारादिद्वादशवर्णान् सबिन्दून्
द्वादशदलकमले हृदये न्यसेत् । डकारादिदशवर्णान् सबिन्दून् दशदलकमले नाभौ न्यसेत् । बकारा
दिषड्वर्णान् सबिन्दून् षड्दलकमले लिङ्गमूलेन्यसेत् । वकारादिचतुरो वर्णान् सबिन्दून् चतुर्द्दलक
मले मूलाधारे न्यसेत् । हक्षवर्णद्वयं सबिन्दुं द्विदलपद्मे भ्रूमध्ये न्यसेत् । ततो बाह्यमातृकान्यासः ।
तस्या ध्यानम्–" पञ्चाशल्लिपिभिर्व्विभक्तमुखदोःपन्मध्यवक्षस्थलाम्भास्वन्मौलिनिबद्धचन्द्रशक
लामापीनतुंगस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजैर्ब्बिभ्राणां विशदप्रभान्त्रिन
यनां वाग्देवतामाश्रयेत् ॥ ' इति मुद्रादिकमधोदक्षिणहस्तमारभ्य प्रादक्षिण्येन ध्येयम्–एवन्ध्यात्वा
न्यसेत तद्यथा–अं नमो ललाटे। आँ नमो मुखवृत्ते। एवं इं नमः दक्षनेत्रे। ईं नमः वामनेत्रे । उंऊं कर्ण
योः । ऋंॠं नसोः । ऌंॡं गण्डयोः । एं ओष्ठे । ऐं अधरे । ॐ ऊर्द्धदन्तपंक्तौ।औं अधोदन्तपंक्तौ अं
ब्रह्मरन्ध्रे ।अः मुखे । कं दक्षबाहुमूले खं कूर्प्परे । गं मणिबन्धे । घं अङ्गुलीमूले । ङं अंगुल्यग्रे ।

चंछंजंझंञं वामबाहुमूलसन्ध्यग्रकेषु।एवं टंठंडंढंणं दक्षिणपादमूलसंध्यग्रकेषु । तंथंदंधंनं वामपादमूल सन्ध्यग्रकेषु। पं दक्षिणपार्श्वे । फं वामपार्श्वे। बं पृष्ठे । भं नाभौ। मं जठरे । यं हृदि। रं दक्षबाहुमूले । लंक्ककुदि । वं वामबाहुमूले। शं हृदादिदक्षिणकराग्रपर्य्यंते। षं हृदादिवामकराग्रपर्य्यंते । सं हृदादिदक्ष पदे । हं हृदादिवामपदे । ळं हृदाद्युदरे । क्षं हृदादिमुखे । सर्व्वत्र नमोन्तान्न्यसेत् । हक्षमध्ये ळकार स्थितौ प्रमाणं तु–वर्णमालाजपे " अनुलोमविलोमेन क्लृप्तया वर्णमालया । आदिळान्तळादिआ न्तक्रमेण परमेश्वरि ॥ क्षकारम्मेरुरूपञ्च लंघयेन्न कदाचन ॥ " इति मुण्डमालतन्त्रम् । बहुभिरस्याका रोच्चारणयोर्भेदो न क्रियते । वेदऽस्योच्चारणस्थानञ्जिह्वामूलम् । देवनागरवर्णमालायाम् अस्याकार एवम्प्रकारः ळ इति अस्य प्रयोगः । " अग्निमीळे, हे अग्निवीळचित् " इत्यादि ऋग्वेदे । एवं सृष्टि न्यासं विधाय स्थितिन्यासङ्कुर्य्यात् तद्यथा–ऋषिश्छन्दश्चपूर्व्ववदेव देवतात्रविश्वपालिनी । ध्यानंतु– " उपविष्टां वल्लभाङ्के ध्यायेद्देवीमनन्यधीः । मृगबालं वरं विद्यामक्षसूत्रन्दधत्करैः । मालाविद्यालस द्धस्तां वहन्ध्येयः शिवो गिरम्॥ "इति। ततो डकारादिक्षकारांतान् वर्णान् सविसर्गबिन्दून् पूर्व्वोक्तस्था नेषु विन्यस्य तादृशानेव अकारादिठकारांतान्पूर्व्वोक्तस्थानेषु विन्यसेत् यदाह–"एवं ध्यात्वा डकारा

द्यान्वर्णानङ्गेषु विन्यसेत् । गुल्फादिजानुपर्य्यंतं स्थितिन्यासोयमीरितः ”॥ततः संहारमातृकान्यासः-

ऋष्यादिरत्रापि पूर्व्ववत् । कूटङ्कसारङ्गविद्याहस्ता लिङ्कुचानम्रां रक्ताब्ज गादीनि दक्षिणाधोहस्तमा बिन्दुयुक्तक्षकाराद्यकारा हृदादिमुखे इत्यादि । एवं सृष्टिन्यासं स्थितिन्या



तस्या ध्यानम्-“ अक्षस्र न्त्रिलोचनाम् । चन्द्रमौ स्थाङ्गिरं भजे ॥ ” अक्षस्र रभ्य ध्येयानि । न्यासस्तु न्तवर्णानाम् यथाक्षं नमो संहारन्यासङ्कृत्वा पुनः सञ्च कुर्य्यात् ततः प्राणा

यामं कुर्य्यात् “ कृत्वेत्थम्मातृकान्यासम्प्राणायामं समाचरेत् । इत्युक्तेः । तद्यथा--मूलमंत्रस्य प्रणवम न्त्रस्य वा षोडशवारजपेन वायुम्पूरयेत् तस्य चतुःषष्टिवारजपेन वायुङ्कुम्भयेत् तस्य द्वात्रिंशद्वार जपेन वायुं रेचयेत् पुनर्दक्षिणेनापूर्य्य उभाभ्याङ्कुम्भयित्वा वामेन रेचयेत् पुनर्व्वामेनापूर्य्य उभा

म्याङ्कुम्भयित्वा दक्षिणेन रेचयेत् । अशक्तस्तु चतुर्द्धा जपन् पूरयित्वा षोडशधा जपन् कुंभयित्वा चाष्टधा जपन् रेचयेदिति क्रमेण प्राणायामङ्कुर्य्यात् । "अशक्तस्तत्तुरीयतः" इत्युक्तेः तत्राङ्गुलि नियमः—कनिष्ठानामिकाङ्गुष्ठैर्न्नासापुटधारणम्प्राणायामः । ततः पीठन्यासः—"प्राणायामं विधायेत्थ म्पीठन्यासं समाचरेत् । तत्रादौ हृदिविन्यासं कथयामि यथातथम् ॥ आधारशक्तिं कूर्म्माख्यमन न्तम्पृथिवीन्तथा । क्षीराब्धिं श्वेतद्वीपञ्च मणिमंडपमेव च ॥ कल्पद्रुम्मणिवेदीञ्च रत्नसिंहासनन्त था । प्रणवादिनमोंतेन न्यसेत्साधकसत्तमः ॥" इत्युक्तेः । तद्यथा—ॐ आधारशक्तये नमः ॐ प्रकृत्यै नमः एवङ्कूर्म्माय अनन्ताय पृथिव्यै क्षीरसमुद्राय श्वेतद्वीपाय मणिमण्डपाय कल्पवृक्षाय मणि वेदिकायै रत्नसिंहासनाय एतत्सर्व्वं हृदि ततो दक्षिणस्कंधे धर्म्माय नमः वामस्कंधे ज्ञानाय नमः वामोरौ वैराग्याय दक्षिणोरौ ऐश्वर्य्याय मुखे अधर्म्माय वामपार्श्वे अज्ञानाय नाभौ अवैराग्याय दक्षपार्श्वे अनैश्वर्य्याय सर्व्वत्र प्रणवादिनमोन्तेन न्यसेत । हृदि ॐ अनन्तायनमः । एवं ॐ पद्मा य नमः ॐ सूर्य्यमण्डलाय द्वादशकलात्मने नमः ॐ सोममण्डलाय षोडशकलात्मने नमः मं वह्नि मण्डलाय दशकलात्मने॰ सं सत्त्वाय॰ रं रजसे॰ तं तमसे॰ आं आत्मने॰ अं अन्तरात्मने॰ पं

परमात्मने • ह्रीं ज्ञानात्मने• इत्यन्तं विन्यस्य इति तंत्रसारः । हृत्पद्मस्य पूर्व्वादिकेशरेषु पीठशक्तीः मध्ये पीठमनुञ्च न्यसेत्।ततऋष्यादिन्यासः—मूर्ध्नि अमुकऋषये नमः मुखे अमुकच्छन्दसे नमः हृदि अमुकदेवतायै नमः गुह्ये अमुकबीजाय नमः। पादयोः अमुकशक्तये नमः। सर्व्वांगे अमुककीलकाय नमः ततस्तत्तत्कल्पोक्तमुद्राम्प्रदर्श्य ध्यानङ्कुर्य्यात्। एतच्च ध्यानं देवतारूपतया स्वचिन्तनम् हृत्कमलकर्णिकायां देवताचिन्तनं वा ततो देवतारूपतया ध्यातस्यात्मनोमानसैरुपचारैः पूजनङ्कुर्य्यादिति प्रदीपः।मानसपूजा यथा—हृत्पद्ममध्ये देवतां विभाव्य मूलाधारत उत्थाय कुण्डलिनीन्द्वादशान्तन्नीत्वा परमशिवेन सह सङ्गमं विभाव्य तदुत्थामृतधारया स्वेष्टदेवताचरणयोः पाद्यन्दद्यात् ततो मनसार्घ्यन्दत्वा सहस्रदलपद्मभृङ्गारललितपरमामृतजलेन आचमनीयम्मुखे पञ्चविंशतितत्त्वेन गंधञ्च अहिंसां विज्ञानङ्क्षमान्दयाम् अलोभम् अमोहम्अमात्सर्य्यम् अमायाम् अनहङ्कारम् अरागम् अद्वेषम् इंद्रियाणि द्वादश एतानि पुष्पाणि च प्रदापयेत्।ततो वायुरूपं धूपन्तेजोरूपं दीपञ्च दद्यात् । अम्बरञ्चामरम् दर्प्पणं सूर्यं चंद्रञ्छत्रं पद्मन्तु मेखलाम् आनन्दं हारमुत्तमम् अनाहतध्वनिमयीङ्घण्टां निवेदयेत्। ततः सुधारसाम्बुधिम्मांसपर्व्वतं ब्राह्माण्डपूरितम्पायसञ्च दत्त्वा "मनोनर्त्तनसत्तालैः शृङ्गारादिरसोद्भवैः ।

नृत्यैर्गीतैश्च वाद्यैश्च तोषयेत्परमेश्वरीम्॥"एवं सम्पूज्य अभेदेन जपः कार्य्यः इति मानसपूजाविधिः॥ ततो विशेषार्घपात्ररूपशङ्खस्थापनङ्कुर्य्यात् तद्यथा—"अर्घस्य त्रीणि पात्राणि पाद्यस्यापि त्रय म्भवेत् । तथैवाचमनीयानि पात्राणि च विभागशः॥तथा करणदौर्ब्बल्यादेकमेव प्रशस्यते" । किन्तु सामान्यार्घ्यविशेषार्घ्यद्वयस्यावश्यकत्वम् । तथा च नवरत्नेश्वरे—"एकपात्रन्न कर्त्तव्यंयदिसाक्षान्महे श्वरः।मंत्राःपराङ्मुखा यान्ति आपदश्च पदेपदे॥इह लोके दरिद्रःस्यान्मृते च पशुतांव्रजेत्।" इति राघ वभट्टधृतम्। "सर्व्वत्रैव प्रशस्तोऽब्जः शिवसूर्य्यार्चनं विना" । अब्जः शङ्खः स्ववामाग्रेत्रिकोणमण्ड लङ्कुर्य्यात् इति तंत्रसारः । त्रिकोणषट्कोणवृत्तचतुरस्राणि कुर्य्यादिति मन्त्रमहोदधिः । ततस्तदु परि त्रिपदीमारोप्य आधारशक्तये नम इति तां सम्पूज्य अस्त्राय फडिति शङ्खम्प्रक्षाल्य तदुपरि संस्थाप्य नम इति मंत्रेण गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्व्वास्तत्र निःक्षिपेत् । तंत्रकौमुद्याम्— "ततोर्घस्थापनङ्कुर्य्यादिष्टदेवानुसारतः । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः॥ सदूर्व्वं सर्व्वदेवानामे तदर्घमितीरितम् । अस्त्रेण पात्रम्प्रक्षाल्य वामतो वह्निमण्डले॥स्थापयित्वा हृदा तत्र गंधपुष्पादिकान पि।निःक्षिप्य प्रतिलोमेन मूलान्ते मातृकां जपेत्"॥इत्यभिधानात् । ततो विमलजलेन विलोममातृ

कावर्णैर्म्मूलेन वा पूरयेत् "शुद्धतीर्थजलेनैव पूरयेच्छङ्खपात्रकम् । विलोममातृकाभिर्व्वा मूलेन विधिना सुधीः ॥" इत्युक्तेः । विलोममातृका यथा–क्षंळंहंसंषंशंवंलंरंयंमंभंबंफंपंनंधंदंथंतंणंढंडंठंटंञंझंजंछंचंङंघंगंखंकंअःअंऔंओंऐंएंलॄंलृंॠंऋंऊंउंईंइंआंअं इति । ततो मंवह्निमण्डलाय दशकलात्मने नम इति त्रिपदिकायाम्पूजा । अं सूर्य्यमण्डलाय द्वादशकलात्मने नम इति शंखे पूजा । उं सोममण्डलाय षोडशकलात्मने नम इति जले गन्धपुष्पादिभिः सम्पूज्य "ओं गंगे च यमुने चैव गोदावरि सरस्वति । नर्म्मदे सिन्धु कावेरि जलेस्मिन्सन्निधिङ्कुरु ॥" इत्यनेनांकुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य अमुकदेवते इहागच्छ इहागच्छ इह तिष्ठ इहतिष्ठ इति मन्त्रेण स्वहृदयाद्देवतान्तत्रावाह्य हमिति तर्ज्जनीभ्यामवगुण्ठयेत् । "तज्जलन्नयनमन्त्रवीक्षितं वर्म्मणा समवगुण्ठ्य दोर्य्युजा।"इति पूजाप्रदीपेऽभिधानात्।अवगुण्ठनङ्कराभ्यामेवेति नयनमन्त्रं वौषडिति ततः फडिति मन्त्रेण गालिनीमुद्राम्प्रदर्श्य वौषडिति तज्जलं वीक्ष्य पुनरंगमन्त्रैः सकलीकृत्य गन्धपुष्पाभ्यान्देवतान्तत्र सम्पूज्य तदुपरिमत्स्यमुद्रयाच्छाद्य शङ्खमुद्राम्प्रदर्श्य मूलमन्त्रमष्टधा जपेत्।तथा च गौतमीये–"गन्धपुष्पैः समभ्यर्च्य कृष्णाख्यन्धाम योजयेत् । अष्टकृत्वो जपेन्मन्त्रं शिखायां गालिनीं न्यसेत्॥" सकलीकरणञ्च देवतांगे षडंगन्यासकर

णम् । शैवागमे–" देवतांगे षडंगञ्च सकलीकरणम्भवेत् । " इति । अत्र कृष्णपदन्तत्तद्देवतापरम् । ततो धेनुमुद्राम्प्रदर्श्य अस्त्रेण संरक्ष्य तस्मात्किञ्चिज्जलम्प्रोक्षणीपात्रे निक्षिप्य तेनोदकेनात्मानम्पूजोपकरणञ्चाभ्युक्ष्य सिंहासनादौ तत्तद्देवतायन्त्रादिपूजापीठं संस्थाप्य पीठपूजां कुर्य्यात् सा यथा–पीठस्योत्तरे गुरुपङ्क्तिं पूजयेत् यथा वायव्यादीशपर्य्यन्तम् ॐ गुरुभ्यो नमः ॐ परमगुरुभ्यो नमः ॐ परापरगुरुभ्यो नमः ॐ परमेष्ठिगुरुभ्यो नमः पीठमध्ये ॐ आधारशक्तये नमः एवङ्कूर्म्माय शेषाय पृथिव्यै क्षीरसमुद्राय श्वेतद्वीपाय मणिमण्डपाय कल्पवृक्षाय मणिवेदिकायै रत्नसिंहासनाय, अग्निकोणे धर्म्माय नैर्ऋतीवाय्वीशानेषु ज्ञानं वैराग्यमैश्वर्य्यञ्च पूजयेत् । ततः पूर्व्वादिचतुर्दिक्षु अधर्म्माज्ञानावैराग्यानैश्वर्य्याणि पूजयेत् । मध्ये पुनः अनन्तादि ह्रीं ज्ञानात्मने नम इत्यन्तम्पूर्व्वोक्तम्प्रपूज्य पूर्व्वादिकेशरेषु मध्येषु च तत्तत्कल्पोक्तपीठशक्तिः सम्पूज्य पीठमनुञ्च पूजयेत् । पूर्व्वादिदिङ्नियमस्तु यामले–"पूज्यपूजकयोर्म्मध्यम्प्राचीति कीर्त्यते बुधैः । तद्दक्षिणन्दक्षिणंस्यादुत्तरञ्चोत्तरम्मतम् ॥ पृष्ठन्तु पश्चिमं ज्ञेयं सर्व्वत्रैवं प्रयोजयेत् ॥" इति पुन्देवतापरम् । "पुरन्दरमुखो मन्त्री यदा यन्त्रे प्रपूजयेत् । देवीपश्चात्तदा प्राची प्रतीची देवतापुरः ॥"एवम्–"उत्तराभिमुखो भूत्वा यदादेवीम्प्रपूजयेत् ।

उत्तराशा तदा देवि पूर्व्वांशैव निगद्यते।ईशानकोणन्देवेशि तदाग्नेयम्प्रचक्षते॥"इति वचनात्।अथ पूजा सा च यन्त्रे प्रशस्ता तदभावे चतुर्द्वारभूपुरावृताष्टदलपद्मे। पूजा प्रदीपे–"आदौ लिखेद्यन्त्रराजन्तत्तत्कल्पोक्तलक्षणम्।सौवर्ण्णे राजते ताम्रे पीठे भूर्ज्जपटे भुवि॥विना यन्त्रेण-चेत्पूजा देवता न प्रसीदति।कल्पोक्तयन्त्राभावे तु भूपुरावृतश्चतुर्द्वारमष्टदलं लिखेत् इत्यभिधानात् । यन्त्रलेखनाद्यशक्तस्तु शालग्रामादिपूजाचक्रे ॐ आधारशक्त्यादिपीठदेवताभ्यो नमः इत्यनेन जपाकरवीरापराजिताद्यन्यतमपुष्पविशेषार्घोदकचन्दनाक्षतैरेकदैव पीठदेवताः संपूज्यावाहनङ्कुर्य्यात् तद्यथा–पूजाधारयंत्रे मूलेन तत्तद्देवतामूर्त्तिम्परिकल्प्य कूर्म्मसुद्राञ्जलिना मातृकावर्णधिया रक्तपुष्पाणि गृहीत्वा स्वहृदयाब्जे विद्युत्पुञ्जनिभस्फुरत्पूज्यदेवतातेजः सुषुम्णावर्त्मना सहस्रदलकमलमध्यवर्तिनि परमशिवे संयोज्य परमामृतलोलितश्चिदानन्दघनं विभाव्य वामनासामार्गेण वायुबीजेन करस्थपुष्पाञ्जलौ मातृकाम्भोजस्वरूपे ह्स्रौः कर्णिके स्वरद्वन्द्वाष्टकशोभमानकेसराष्टके कचटतपयशलवर्गाष्टकसहिताष्टपत्रसहिते दिग्गतवकारकोणगतठकारभूपुरावृते संयोज्य कामकलात्मिकान्देवतान्ध्यायेत् ध्यानं यथा भावचूडामणौ–"मुखं बिन्दुवदाकारन्तदधः कुचयुग्मकम् । सर्व्वविद्यासुसम्पन्नं सर्व्ववाग्विभवप्रदम् ॥

सर्व्वार्थसाधनन्देवं सर्व्वरञ्जनकारकम् । तदधः सपरार्द्धन्तु सुपरिष्कृतमण्डलम् ॥ सर्व्व देवादिभूतञ्च सर्व्वदेवनमस्कृतम् । सर्व्वानन्देन सम्पूर्णं सर्व्वस्य च प्रवर्त्तकम् । एतत्कामकलाध्यानं सुगोप्यं साधकोत्तमः ॥ इति । "ॐ देवेशि भक्तिसुलभे परिवारसमन्विते । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥ " इति पठन् कल्पितमूर्तेः शिरसि पुष्पाञ्जलिन्दत्त्वा देवतातेजःपुष्पाञ्जलिमपहाय ब्रह्मरन्ध्रद्वारेण तस्या मूर्त्तेर्हृदयं प्रविश्य स्थिरीभूतं भावयेत् । तन्त्रकौमुद्यान्तु—"ध्यानमात्मेष्टदेवस्य मनसा वेदनम्मतम् । तदपि द्विविधम्प्रोक्तं निर्गुणं सगुणन्तथा ॥ यज्जीवब्रह्मणोरैक्ये सोहंस्यामिति वेदनम् । तदेव निर्गुणन्ध्यानमिति वेदविदो विदुः ॥ आत्मनो हृदयाम्भोजङ्कर्णिकाकेशरान्वितम् । प्रफुल्लं सूर्य्यसोमाग्निमण्डलेन विराजितम् ॥ स्वीयेष्टदेवतान्तत्र ध्यायेदागमवेदिताम् । एवं यद्वेदनन्तद्धि सगुणन्ध्यानमुच्यते ॥ मूलाधारे प्रदीपाभन्देवन्तेजो विचिन्तयेत् । मूलमन्त्रेण तत्तेजः सुषुम्नावर्त्मना शिवे ॥ संयोज्यानीय भालांतश्चिन्तयित्वेष्टदेवताम् । नासिकारन्ध्रमार्गेणनिर्गते सुमनोहरम्॥ करस्थपुष्पसम्भारे मातृकाम्भोजरूपिणि । संय्योज्य ब्रह्मरंध्रेण मूर्तौ तस्या विधानतः ॥ " इत्यभिहितम् । तत आवाहनमुद्रया मूलान्ते अमुकदेवि इहावह इहावह । स्थापनमुद्र

यामूलान्ते अमुकदेवि इह तिष्ठ इह तिष्ट सन्निधापनमुद्रया मूलान्ते अमुकदेवि इह सन्निधेहि इह सन्निधेहि।सन्निरोधनमुद्रया मूलान्ते अमुकदेवि इह सन्निरुद्धयस्व इह सन्निरुद्धयस्व सम्मुखीकरणमुद्रया मूलान्ते अमुकदेवि इहसंमुखीकृता भव इह संमुखी कृताभव इति पञ्चमुद्राभिरावाहनादि कृत्वा यन्त्रादौ प्राणप्रतिष्ठाङ्कुर्य्यात् सा यथा—लेलिहानमुद्रया देव्या हृदये करन्दत्वा आँ ह्रीं क्रों हं सः श्री अमुकदेवतायाः प्राणा इह प्राणाः आँ ह्रीं क्रों हंसः श्री अमुकदेवताया जीव इह स्थितः आँ ह्रीं क्रों हंसः श्रीअमुकदेवतायाः सर्वेन्द्रियाणि इह स्थितानि आँ ह्रीं क्रों हंसः श्रीअमुकदेवताया वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखञ्चिरन्तिष्ठंतु स्वाहा इति प्राणान्प्रतिष्ठापयेत्। अत्रेदम्बोध्यम्—प्रतिष्ठितप्रतिमाशालिग्रामादिपीठेषु आवाहनविसर्ज्जने विनैव पूजा विधेया "शालग्रामे स्थिरायां वा नावाहनविसर्ज्जने" ॥ इत्यभिधानात् । एवञ्च कुण्डलिन्यामपि नावाहनविसर्ज्जने शालग्रामशिलात्वाविशेषादित्येके । स्वकीयहृदयाकाशवर्त्तिचैतन्यस्य वामनासारन्ध्रद्वाराञ्जलिवर्त्तिपुष्पे आनीय शालग्रामादिपीठवर्त्तिचैतन्ये कल्पितमूर्तौ पुष्पप्रक्षेपद्वारा ऐक्यं विधाय पूजयित्वा पूर्व्वकल्पितेष्टदेवतां पुष्पद्वारा हृदयाकाशवर्त्तिचैतन्ये योजयेदित्येवं रूपावाहनविसर्ज्जने शा

ल्ग्रामादावपि विधेये । न तु प्राणप्रतिष्ठा कार्य्येत्यपरे । तन्त्रकौमुद्याम्महामहोपाध्यायदेवनाथठक्कुर स्तु–"शालग्रामशिलादौ हि नित्यं सन्निहितो हरिः । इति केचिद्वदन्त्यत्रबौधायननिदर्शनात् । सर्व्वत्र परिपूर्णस्य तनुरूपस्य तेजसः । सादरं सम्मुखीभावमावाहनमितीरितम् ॥ इति सिद्धान्तसारीयव चनस्यानुरोधतः । शिलादावपि कुर्व्वन्ति केचित्त्वावाहनम्बुधाः" इत्युक्तवानिति । कुण्डलिनी तु द्विविधा वामावर्त्ता दक्षिणावर्त्ता च। महाविपुलतंत्रे–"वामावर्त्ता भवेद्रेखा वर्त्तुलत्रितया यदि । कुण्डली सा च विज्ञेया शक्तिपूजन उत्तमा ॥ दक्षिणे वर्त्तुलं यत्र तत्सुदर्शनमीरितम् ॥" इति दाक्षिणा त्यनिबन्धे–"सप्ताङ्कसदृशाकारा दक्षिणावर्तसञ्ज्ञिका । नवाङ्केन समाकृत्या कुण्डल्येव सुदर्शनम् । वामावर्त्तापि सैवोक्ता वामाचाररता शुभा ॥" इत्युक्तत्वात् । ततोवगुण्ठनमुद्रया मूलान्ते श्री अमुकदेवि अवगुण्ठिता भवेत्यवगुण्ठ्य सकलीकुर्य्यात् । तच्च पुष्पेण सम्पूज्य देवतायास्तत्त दङ्गेषु तद्देवतामूलमंत्रस्य षडङ्गन्यास एव ततो धेनुमुद्रया वमित्यमृतीकृत्य परमीकरणमुद्रया परमी करणङ्कुर्य्यात् तच्चापराधक्षमापनम् "क्षमापनापराधानां विज्ञेया परमीकृतिः।" इति वचनात् । ततः प्राणप्रतिष्ठाङ्कृत्वा षोडशोपचारैः पञ्चोपचाराद्यन्यतमोपचारैर्व्वा पूजयेत्। तत्र षोडशोपचारा यथा–

मूलमुच्चार्य्य इदमासनं अमुकदेवतायै नमः इत्यासनन्दद्यात् । दाने तु–आदौ मूलन्ततो द्रव्योल्लेखः ततःसम्प्रदानम् ततस्त्यागार्थकम्पदमिति सर्व्वत्र । तथा च कुलार्णवे–"आदौ मन्त्रं समुच्चार्य्य पश्चाद्देयं समुच्चरेत् । सम्प्रदानन्तदन्ते तु त्यागार्थकपदन्ततः । एवं क्रमेण देवेशि उपचारान्प्रकल्पयेत्॥" इति ततो मूलम्पठन् तद्गतमानसः महामुद्रया स्वागतन्ते इति पठेत् ततः श्यामाकविष्णुक्रांताब्जदूर्व्वायुतपाद्यङ्गृहीत्वा मूलमुच्चार्य्य इदम्पाद्यम् अमुकदेवतायै नम इति देवतापादयोर्द्द्यात् । ततो गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्व्वायुतमर्घङ्गृहीत्वा मूलमुच्चार्य्य एषोर्घः अमुकदेवतायै स्वाहा इति देवताशिरसि दद्यात् । वैष्णवे तु–अर्घोत्तरम्पाद्यदानमिति विशेषः । ततो जातीलवङ्गकङ्कोलचूर्णयुतजलेन मूलमुच्चार्य्य इदमाचनीयम् अमुकदेवतायै स्वधा इति देवतामुखे आचमनीयन्त्रिर्द्दद्यात् । "स्वधेत्याचमनीयञ्च त्रिवारम्मुखपङ्कजे ।" इति पूजाप्रदीपधृततूर्णायागवचनात् । ततः कांस्यपात्रे दध्याज्यमधुरूपम्मधुपर्कङ्गृहीत्वा मूलमुच्चार्य्य एष मधुपर्कः अमुकदेवतायै स्वधा इति मुखे दद्यात्। ततः पुनराचमनीयम्मूलेन अमुकदेवतायै स्वधा इति दद्यात् । एवं स्नानवस्त्रोपवीतनैवेद्यान्तेपि दद्यात् । ततो मूलमुच्चार्य्य स्नानीयमिदञ्जलम् अमुकदेवतायै निवेदयामि इति दद्यात् । ततो मूले

न विष्णौ पीते शम्भौ सिते विघ्नार्कशक्तिषु रक्ते परिधानीयोत्तरीयवस्त्रे नम इत्युच्चार्य्य दद्यात्। पुन्देवतापक्षे उपवीतमिति विशेषः। ततो मूलेनाभरणन्नम इत्याभरणन्दद्यात्। शक्तिपक्षेनैव केशसम्मार्ज्जनङ्कज्जलदानञ्च ज्ञेयम्। ततो मूलेन गन्धमुद्रया एष गन्धः अमुकदेवतायै नमः इति चन्दनकर्प्पूरकालागुरुनिर्म्मितङ्गन्धन्दद्यात्। एवं यथायोग्यं रक्तचन्दनसिन्दूराक्षतान्दद्यात तत आदर्शञ्च दर्शयेत्। ततो मूलेन पुष्पमुद्रया एतानि पुष्पाणि अमुकदेवतायै वौषट् इति पुष्पाणि दद्यात्। अत्र तन्त्रकौमुद्याम्—"परारोपितवृक्षेभ्यः पुष्पाण्यानीय चार्च्चयेत्। अविज्ञाप्यैव तं यस्तु निष्फलन्तस्य पूजनम्॥" इति विशेषः। ततः षडङ्गेन पूजयेत ततो मूर्द्धगुह्यपादद्वय सर्व्वाङ्गेषु मूलेन पञ्चपुष्पाञ्जलीन् दत्त्वा तत्तत्कल्पोक्तावरणपूजाङ्कुर्य्यात तथा च "पञ्चपुष्पाञ्जलीन् दत्त्वा परिवारार्च्चनञ्चरेत।" इति भट्टः। सर्व्वत्रोपचारदाने तत्तदुपचारमुद्रा दर्शनीया। प्रतिमायाम्पूजाकरणे त्वावरणपूजा घटे कार्य्या "प्रतिमायाश्च पुरतो घटं संस्थाप्य यत्नतः। परिवारान् यजेत्तत्र घटे तु परमेश्वरि॥ यन्त्राधिष्ठातृदेवांश्च घटचक्रे प्रपूजयेत। समस्तदेवतारूपं घटञ्च परिचिन्तयेत्॥" इत्यभिधानात्। ततो धूपपात्रस्थिताङ्गारे गुग्गुल्वगुरुघृतकर्प्पूरशर्करा:

प्रक्षिप्य फडिति मन्त्रेण जलेन सम्प्रोक्ष्य नम इति तत्र पुष्पम्प्रक्षिप्य धूपपात्रं वाम तर्जन्या संस्पृशन् मूलेन एष धूपः अमुकदेवतायै समर्प्पयामि नम इति धूपमुत्सृजेत् । ततस्तर्जन्यङ्गुष्ठयोगेन धूपमुद्राम्प्रदर्शयेत् । ततो जयध्वनिमन्त्रेण मातः स्वाहेति घण्टामभ्यर्च्य वामहस्तेन वादयन् दक्षिणहस्तेन धूपपात्रमुत्थाप्य नाभितो नासापर्य्यन्तन्त्रिरुत्तोल्य धूपयेत् । ततः फडिति दीपंसम्प्रोक्ष्य नम इति तत्र पुष्पम्प्रक्षिप्य दीपपात्रं वाममध्यमया स्पृशन् मूलमिमन्दीपममुकदेवतायै समर्प्पयामि नम इत्युत्सृज्य दक्षिणहस्तमध्यमाङ्गुष्ठयोगेन दीपमुद्राम्प्रदर्श्य जयध्वनीत्यादिमन्त्रेण पुनर्घण्टामभ्यर्च्य वामहस्तेन वादयन् दक्षिणहस्तेन दीपपात्रमुत्थाप्य नेत्रपर्य्यन्तन्नयेत् । दीपनैवेद्यदाने तु विशेषो यामले—" दीपङ्घृतयुतन्दक्षे तैलयुक्तञ्च वामतः । दक्षिणे च सितावर्त्ति वामतो रक्तवर्त्तिकम् ॥ पक्वापक्वविभेदेन नैवेद्येष्वपि तत्स्थितम् । पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ॥ " इति । ततः चतुरस्रमण्डलस्थापितसाधारस्वर्णादिभाजने साज्यपायसादिनैवेद्यम्परिविष्य फडिति प्रोक्ष्य चक्रमुद्रया संरक्ष्य द्वादशवारं जप्तेन वायुबीजेनाभिमन्त्रितैर्जलैर्नैवेद्यदोषं संशोष्य दक्षिणकरे रमित्यग्निबीजं विचिन्त्य

तत्पृष्ठे वामकरं विन्यस्य दर्शयित्वा नैवेद्यदोषं सन्दह्य वामकरे वमित्यमृतबीजं सञ्चिन्त्य तत्पृष्ठे दक्षिणहस्तङ्कृत्वा अमृतेनाप्लाव्य मूलेन प्रोक्ष्य अष्टधा मूलञ्जप्त्वा धेनुमुद्राम्प्रदर्श्य नैवेद्याय नमः इति गन्धपुष्पाक्षतैरभ्यर्च्य देवमुखोद्गतन्तेजो विचिंत्य वामाङ्गुष्ठेन नैवेद्यभाजनं स्पृशन् दक्षहस्तस्थ जलेन मूलमुच्चार्य इदं नैवेद्यममुकदेवतायै समर्प्पयामि नम इति जलमुत्सृज्य अनामामूलयोरङ्गुष्ठयोगेन नैवेद्यमुद्राम्प्रदर्शयेत् । ॐ अमृतोपस्तरणमसि स्वाहेति देव्या हस्ते जलन्दद्यात् । ततो वामकरेण विकचोत्पलसदृशीं ग्रासमुद्राम्प्रदर्श्य दक्षिणकरेण समंत्रकम्प्राणादिमुद्राम्प्रदर्शयेत् । यथा– ॐ प्राणाय स्वाहा अङ्गुष्ठकनिष्ठानामिकाभिः । ॐ अपानाय स्वाहा अङ्गुष्ठतर्ज्जनीमध्यमाभिः । ॐ व्यानाय स्वाहा अनामामध्यमांगुष्ठैः । ॐ उदानाय स्वाहा अंगुष्ठतर्जनीमध्यमानामाभिः । ॐ समानाय स्वाहा सर्व्वाभिरिति । अथ ब्रह्मेशाद्यैः स्तुतां देवकन्याभिः सुधांशुचामरैः परिवीज्यमानां भोक्तृगणान् हासयन्तीन्देवीन्ध्यायेदिति । अत्र पुन्देवतापक्षे ऊहः कार्य्यः । अत्रैव पानार्थम्पानीयन्ताम्बूलादिकञ्च देयम् । अत्रावसरे पूजाङ्गहोमङ्कुर्य्यात् । तद्यथा–तत्रात्मदक्षिणहस्तप्रमाणञ्चतुरङ्गुलमुन्नतं स्थण्डिलङ्कृत्वा मूलेन वीक्ष्य फडिति प्रोक्ष्य तैरेव कुशैः सन्ताड्य हुमिति मन्त्रेणाभ्युक्ष्य मूलेना

ग्निमादाय तदंशङ्गृहीत्वा नैर्ऋतकोणे ॐ क्रव्यादेभ्यो नम इति क्षिपेत्। ततो मूलेनाग्निं स्थापयित्वा वमित्यमृतीकृत्य हुमित्यवगुण्ठ्य फडिति संरक्ष्य ॐ वैश्वानरजातवेद इहावह लोहिताक्ष सर्व्वकर्म्माणि साधय स्वाहेति वह्निं सम्पूज्य तत्रेष्टदेवतामावाह्य सम्पूज्य आज्येन ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवःस्वः स्वाहा इति हुत्वा मूलमन्त्रेण पञ्चविंशतिसंख्याकं हुत्वा पुनर्व्याहृति भिर्हुत्वा मूर्त्तौ देवतां संयोज्याग्निं विसर्ज्जयेदिति । "भो भो वह्ने महाशक्ते सर्व्वकर्म्मप्रसाधक । कर्म्मान्तरेपि सम्प्राप्ते सान्निध्यङ्कुरु सादरम् ॥" इति विसर्ज्जनङ्कृत्वा देवतायै आचमनन्दत्त्वा तन्मुखागतन्तेजः पुनस्तन्मुखे निर्गतमिति विचिन्त्य पुष्पाञ्जलिन्दत्त्वा ताम्बूलं निवेद्य छत्रचामरे दर्शयेत् । अथ जपात्पूर्व्वमितिकर्तव्यता—गुर्व्वादिनमस्कारम् १ । मन्त्रशिखाम् २ । मन्त्रचैतन्यम् ३ । मन्त्रार्थभावनाम् ४ । शिरःपद्मे गुरुध्यानम् ५ । इष्टदेवताध्यानम् ६ । मूर्ध्नि कुल्लुकाम् ७ । हृदि सेतुम् ८ । कण्ठे महासेतुम् ९ । मणिपूरे निर्व्वाणजपम् १० । योनिमुद्राविभावनाम् ११ । ऋष्यादिन्यासम् १२ । कराङ्गन्यासौ १३ । १४ । प्राणायामम् १५ । मुखशोधनम् १६ । जिह्वा शोधनम् १७ । प्राणयोगम् १८ । दीपनीम् १९ । जननाशौचभङ्गञ्च कृत्वा२० । भ्रूमध्यं नसोरग्रं वा

दृष्ट्वा सेतुम् २१ । पुनर्ज्जपेदिति सरस्वतीतन्त्रे प्रथमपटले–"अथोच्यते जपस्यात्र क्रमश्च परमाद्भुतः । यत्कृत्वा सिद्धिसङ्घानामधिपो जायते नरः ॥ गुर्व्वादिनतिरादौ स्यात्ततो मन्त्रशिखाम्भजेत् । ततोपि मंत्रचैतन्यम्मन्त्रार्थभावना ततः ॥ गुरुध्यानं शिरः पद्मे इष्टध्यानमतः परम् । कुल्लुकाञ्च ततः सेतुम्महासेतुमनंतरम्। निर्व्वाणञ्च ततो देवि योनिमुद्राविभावना । अङ्गन्यासं प्राणायामञ्जिह्वाशोधनमेव च ॥ प्राणयोगं दीपनीञ्च अशौचभङ्गमेव च । भ्रूमध्यं वा नसोरग्रं दृष्ट्वा सेतुञ्जपेत्पुनः ॥ सेतुमशौचभंगञ्च प्राणायाममितिक्रमः ।" चतुर्थपटले–"कुल्लुकां मूर्द्धि सञ्जप्य हृदि सेतुं विचिन्तयेत् । महासेतुं विशुद्धौ च कण्ठदेशे समुद्धरेत् ॥ मणिपूरे तु निर्व्वाणम्महाकुण्डलिनीमधः । स्वाधिष्ठाने कामबीजं राकिनीमूर्द्धि संस्थितम् ॥ विचिन्त्य विधिवद्देवि मूलाधारांतिकां शिवे। विशुद्धांतं स्मरेद्देवि बिसतन्तुतनीयसीम्। वेदिस्थानं हि जिह्वांतम्मूलमंत्रावृतम्मुहुः ॥" इति। तत्र मंत्रशिखा–"मूलाधारादिचक्रेषु सप्तधा सप्तसु क्रमात्। नियोजनङ्कुण्डलिन्या ज्ञेया मंत्रशिखा शिवे ॥ " इति यामलोक्ता। कुल्लुका तु रुद्रयामले–"तारायाः कुल्लुका देवि महानीलसरस्वती " सा यथा–"ह्रींस्त्रीं हूँ पञ्चाक्षरी कालिकायाः कुल्लुका परिकथ्यते । कालीकूर्च्चं वधूर्माया फडन्ता परमेश्वरि ॥ " यथा

"क्रींहूँस्त्रींह्रीं फट् श्रीमत्त्रिपुरसुंदर्य्याः कुल्लुका द्वादशाक्षरी। वाग्भवम्प्रथमम्बीजङ्कामबीजमनंतरम् ॥ लज्जाबीजन्ततः पश्चात्त्रिपुरे च पदं ततः। ततो भगवति पदमंते ठद्वयमुद्धरेत् ॥" यथा-"ऐं क्लींह्रीं त्रिपुरे भगवति स्वाहा "इति ते कथिता देवि संक्षेपात्कुल्लुका मया इत्यादिनोक्ता। सेतुरपि तत्रैव- "विप्राणां प्रणवः सेतुः क्षत्रियाणान्तथैव च। वैश्यानान्तु फडर्णः स्यान्माया शूद्रस्य कथ्यते ॥" इति। महासेतुरपि तत्रैव-"महासेतुश्च देवेशि सुंदर्य्या भुवनेश्वरी। कालिकायाः स्वबीजन्तु तारायाः कूर्च्चबीजकम् ॥ अन्यासां तु वधूबीजम्महासेतुर्व्वरानने ॥" इति। निर्व्वाणमपि तत्रैव- अथ वक्ष्यामि निर्व्वाणं शृणुष्वावहितानघे। प्रणवम्पूर्व्वमुच्चार्य्य मातृकाञ्च समुच्चरेत् ॥ अथ मूलम्महेशानि ततो वाग्भवमुच्चरेत। मातृकाञ्च समस्ताञ्च पुनः प्रणवमुच्चरेत्। एवम्पुटित मूलन्तु प्रजपेन्मणिपूरके ॥" इति। अत्राङ्गन्यासपदम् ऋष्यादिन्यासकरन्यासयोरपि बोधकम्। एवञ्जिह्वाशोधनं मुखशोधनस्याप्युपलक्षणम्। तदुभयञ्च प्रणवस्य दशधा जपेन भवतीति ज्ञेयम् तत्रैव प्राणयोगः-" मायया पुटितो मन्त्रः सप्तधा जपितः पुनः। स प्राणो जायते देवि प्राणयोग इति स्मृतः ॥" इति। दीपन्यपि तत्रैव-"वेदादिपुटितं मन्त्रं सप्तवारञ्जपेत्पुनः। दीपनीयं समाख्या

ता सर्व्वत्र परमेश्वरि ॥ " इति । अशौचभङ्गश्च जननमरणाशौचयोर्भंगः । स च क्रमेण जपस्याद्यन्तयोः कार्य्यः । स च प्रणवपुटितस्य मूलमन्त्रस्य सप्तधा जपेन भवति । कुलार्णवे–" ब्रह्मबीजम्मनोर्दत्त्वा चाद्यन्ते च महेश्वरि । सप्तवारञ्जपेन्मन्त्रं सूतकद्वयमुक्तये ॥ " इत्युक्तेः । ततो जपमालामानीय पुरतः क्वचित्पात्रे संस्थाप्य । "ह्रीं मालेमाले महामाले सर्वशक्तिस्वरूपिणि । चतुर्व्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ " इति मन्त्रेण ॐ अमुकदेवतामालायै नम इत्यर्घोदकगन्धाक्षतपुष्पादिभिः मालां सम्पूज्य ह्रीं अविघ्नं कुरु माले त्वञ्जपकाले सदा मम । निर्व्विघ्नङ्कुरु देवेशि अक्षमाले नमोस्तु ते ॥" इति मन्त्रेण दक्षिणहस्तेन गृहीत्वा शिरसि गुरुं हृदये स्वेष्टदेवतां ध्यायन् हृदयसमीपम्मालामानीय दक्षहस्तमध्यमामध्यमपर्व्वणि संस्थाप्य प्रणवमुच्चार्य्य सहस्रधा शतधा दशधा वा मूलमन्त्रञ्जपेत् । पुनः प्रणवमुच्चार्य्य जपं समाप्य ह्रीं त्वम्माले सर्व्वदेवानाम्प्रीतिदा शुभदा मता । शुभङ्कुरुष्व मे भद्रे यशोवीर्य्यञ्च देहि मे ॥" ह्रीं सिद्ध्यै नम इति स्वशिरसि मालां संस्थाप्य पुनः सेतुमशौचभङ्गञ्च विधाय प्राणायामत्रयङ्कृत्वा ऋष्यादिन्यासङ्करन्यासं षडंगन्यासञ्च विधाय देव्या वामहस्ते अर्घोदकेन "ॐ गुह्यातिगुह्यगोप्त्री त्वङ्गृहाणास्मत्कृतञ्जपम् । सिद्धिर्भवतु

मे देवि त्वत्प्रसादान्महेश्वरि॥" इति जपं समर्प्पयेत्। पुन्देवतापक्षे तु देवस्य दक्षिणहस्ते इति विशेषः। एवम्मन्त्रे सर्व्वत्र पुंलिंगपदमूहनीयम्। क्वचित्तु जपसमर्प्पणानन्तरम्प्राणायाम उक्तः। ततो देवताग्रे मूलेन पञ्चपुष्पाञ्जलीन्प्रक्षिपेत्। ततो मालां स्थापयेत्। सूर्य्यादिसन्निधौ तदभिमुख एव सर्व्वसिद्ध्यै जपङ्कुर्य्यात्। मन्त्रदेवप्रकाशिकायाम्–"सूर्य्यस्याग्रे गुरोरिन्दोर्दीपस्य च जलस्य च। विप्राणाञ्च गवाञ्चैव सन्निधौ सम्मुखो जपेत् ॥" इत्यभिधानात्। ततो घण्टावादनपूर्व्वकं स्तोत्रकवचादिकम्पठित्वा मूर्द्धपर्य्यन्तमारात्रिकङ्कुर्य्यात् ॥ तल्लक्षणन्तन्त्रकौमुद्याम्–"ततः पिष्टकसंजातान्समवर्त्तिसमन्वितान्। घृतादिज्वलितान्मन्त्री उच्चैर्दीपान्प्रदर्शयेत् ॥ पारावतभ्रमाकारान्नातिदीप्तशिखान्वितान्। आदाय पाणिना ध्यायन्मूर्द्धि नीराजयेत्प्रभुम्। आरात्रिकमिति प्रोक्तं घण्टावादनपूर्व्वकम्॥" इति। पूजाप्रदीपेतु–"अमृतापिधानदानात्पूर्व्वमेवारात्रिकमुक्तम्। क्वचित्तु–जपात्पूर्व्वमेव कवचादिपाठः जपसमर्प्पणानन्तरं नित्यहोमश्च दृश्यत इति। ततः प्रदक्षिणामष्टाङ्गप्रणामञ्च कुर्य्यात्। तत उपविश्य पुष्पाञ्जलीन्दत्त्वा दक्षिणहस्तचुलुकेन जलपुष्पाक्षतादीन्यादाय ॐ इतः पूर्व्वम्प्राणबुद्धिदेहधर्म्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्म्मणा हस्ताभ्यामपद्भ्यामुदरेण शिश्ना

यत्स्मृतं यदुक्तं यत्कृतन्तत्सर्व्वम्ब्रह्मार्प्पणम्भवतु स्वाहा इति समर्प्य पुनर्ज्जलाक्षतादीन्यादायमाम्मदीयं सकलं सम्यक् श्री अमुकदेवतायै समर्प्पयामि ॐ तत्सत् पुनर्ज्जलादीन्यादाय ॐ साङ्गे सायुधे सवाहनसपरिवारे अमुकदेवि पूजितासि क्षमस्वेति विसर्ज्जयेत् । ततः संहारमुद्रया तत्तेजः पुष्पेण सार्द्ध माघ्राय हृदये समानीय ऐशान्याम्मण्डलङ्कृत्वा । निर्म्माल्यङ्गृहीत्वा ॐ उच्छिष्टचाण्डालिन्यै नम इति पठित्वा तत्र प्रक्षिपेत् । पुन्देवतापक्षे विष्वक्सेनादिभ्यो नम इति विशेषः । ततः शङ्खस्यावशिष्ट जलं शरीरे लेपयेत् । ततश्चरणोदकङ्गृहीत्वा नैवेद्यन्तद्भक्तेभ्यो दत्त्वा शेषं स्वयम्भुञ्जीत । ततो देवता न्ध्यायन् सुखं विहरेदिति पूजासामान्यविधिः । अथ संक्षेपतः सर्व्वासान्देवतानान्नित्यपूजाविधिर्ल्लिख्यते। तदुक्तं यामले—"आदावृष्यादिविन्यासः करशुद्धिस्ततः परम्। अङ्गुलीव्यापकौ कृत्वा हृदादि न्यास एव च ॥ तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम् । ध्यानं पूजा जपश्चैव सर्व्वतन्त्रेष्वयं विधिः ॥" पूजा च मूलदेवताया एवमन्यच्च । जपार्थं सर्व्वमन्त्राणां विन्यासश्च लिपिं विना । कृते तद्विफलं विद्यात्तस्मादादौ लिपिं न्यसेत् ॥" इति । पूजाप्रदीपे—" एतान्यन्यानि पूजायां साधनानि बहून्यपि । उत्तमानि च मध्यानि न्यूनानि विविधानि वै ॥ स्वस्थः समर्थः

कुर्व्वीत उत्तमैरेव साधनैः ॥ मध्यमो मध्यमैरेव न्यूनो न्यूनैस्तु साधनैः ॥ आपन्नश्चेत्समर्थोऽपि न्यूनैरेव समाचरेत् । पूजाकर्म्मविशेषेण देशकालानुसारतः ॥ यथाशक्ति यथान्यायं यथालोकाविगर्हितम् । पूजां विस्तरतः कर्त्तुं यो न शक्नोति मानवः ॥ स इहाङ्गेन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् । अथवा देवतामात्रन्ध्यात्वा सम्यक् प्रपूजयेत् ॥ अथवा मानसीङ्कुर्य्यादात्मपूजामथापि वा । अथवा केवलाम्पूजाम्बाह्याङ्कुर्य्याद्विचक्षणः ॥ अर्च्चामात्रेऽसमर्थश्चेद्दद्यादर्च्चनसाधनम् । सम्पूज्यैव जपङ्कुर्य्यान्न मन्त्रङ्केवलञ्जपेत् ॥" इति । सकलावरणपूजाशक्तौ—अङ्गेन्द्रवज्राद्यावरणत्रयमेव पूजयेत् । तत्राप्यशक्तौ देवतामात्रपूजां सम्यक्तया । तत्राप्यशक्तौ पूजामात्रङ्कुर्य्यात् । तत्राप्यशक्तावन्यस्मै पूजासाधनं दत्त्वा तद्द्वारा पूजाङ्कारयेत् । तत्राप्यशक्तावन्यविधीयमानपूजाम्पश्येदिति ।

अथ मालानिर्णयः—सा च त्रिविधा करमाला वर्णमाला पद्माक्षादिमाला च। तत्राद्या पुन्देवताविषये । क्रमेण अनामिकामध्यममूलपर्व्वत्रयानामामध्यमाग्रपर्व्वतर्ज्जनीपर्व्वत्रयघटिता मध्यमामूलमध्यमपर्व्वरूपमेरुसहिता । तत्र प्रादक्षिण्यक्रमेण जप्त्वा उक्तपर्व्वसु प्रथमान्तिमे पर्व्वणी विहायाष्टसुपर्वसु जपे नाष्टोत्तरत्वं सम्पादनीयम् । शक्तिमंत्रजपे तु क्रमेणानामिकामध्यममूलपर्व्वकनिष्ठापर्वत्रयानामिकाग्रप

र्व्वमध्यमापर्व्वत्रयतर्ज्जनीमूलपर्व्वघटिता तर्ज्जनीमध्यमाग्रपर्व्वरूपमेरुसहिता। तत्र प्रदक्षिणक्रमेणैव जपेत्। "अनुलोमविलोमाभ्याम्प्रजपेत्सर्व्वमालया। केवलञ्चानुलोमेनप्रजपेत्करमालया॥" इति शिवोक्तेः। तत उक्तपर्व्वसु प्रथमांतिमे पर्व्वणी मुक्त्वाष्टपर्व्वसु सकृज्जपेनाष्टोत्तरत्वञ्जपस्य सम्पादनीयम्। तत्रायंविधिः-छिद्ररहितसंहताङ्गुलीकदक्षिणकरन्तिर्य्यक्कृत्वा हृदयदेशे समारोप्य वाससा हस्तमाच्छाद्य अङ्गुल्यग्राणां पर्व्वसंधीनाञ्च स्पर्शम्मेरुलङ्घनञ्च विहाय ससङ्ख्याकञ्जपङ्कुर्य्यादिति। द्वितीया वर्णमाला-सा तु अकचटतपयशेत्यष्टवर्ग्गावयवकसानुस्वारादिक्षकारान्तैकपञ्चाशद्वर्णघटिता क्षकारस्तत्रमेरुत्वेनोपकल्पितः तत्र शवर्गस्तु शषसहळक्षरूपो ज्ञेयः तस्याञ्च एक वर्णं विभाव्य मंत्रमेकवारमुच्चार्य्य द्वितीयं वर्णं विभाव्य मन्त्र उच्चारणीय इति। एवं ळकारपर्य्यन्ते वर्णे जपित्वा पुनर्ळकाराद्यकारपर्य्यन्ते जपित्वा यदृच्छया शतादिसङ्ख्याकत्वञ्जपस्योपपाद्याष्टानामपिवर्ग्गाणामन्तिमेषु वर्णेषु जपित्वाऽष्टोत्तरत्वं सम्पादनीयम्। तृतीया तु-रुद्राक्षशङ्खपद्माक्षपुत्रजीवमौक्तिकस्फाटिकमणिरत्नसौवर्णविद्रुमराजतकुशमूलैः कृतान्यस्ताकारादिक्षकारान्तवर्णा तन्त्रोक्तविधिना कृतसंस्कारा सर्प्पाकृतिर्ग्गोपुच्छाकृतिर्व्वा गृहस्थस्याक्षमालारूपा। तत्र चाकारघटितमणिमारभ्य ळकारघटितमणिपर्य्य

न्ते जपित्वा लकारघटितमणिमारभ्याकारघटितमणिपर्य्यन्ते जपेदित्यनुलोमविलोमक्रमेण जपित्वा जपस्य शतादिसङ्ख्याकत्वमुपपाद्य प्रथममणौ जपित्वा षण्मणीनन्तरान् कृत्वा अष्टमे मणौ मूलञ्ज पेत्। एवमन्तिमगुटिकापर्य्यन्तजपेनाष्टोत्तरत्वञ्जपस्य सम्पादयेत्। "आदावेकन्ततः सप्त सप्त सप्तक्र मेण तु। एवङ्क्रमेण देवेशि जपेदष्टोत्तरं शतम् ॥" इति तन्त्रान्तरेऽभिधानात्। इमान्तु माला म्पट्टवस्त्रादिनिर्म्मितगोमुखाकृतियन्त्रे संस्थाप्य कृतो जपोऽतिप्रशस्तः। मुण्डमालतन्त्रे– "चतुर्व्विंशा ङ्गुलिमितम्पट्टवस्त्रादिसम्भवम्। निर्म्मायाष्टाङ्गुलिमुखं ग्रीवान्तत्षोडशाङ्गुलाम् ॥ ज्ञेयङ्गोमु खयन्त्रञ्च सर्व्वतन्त्रेषु गोपितम्। तन्मुखे स्थापयेन्मालां ग्रीवामध्यगतः करः। प्रजपेद्वि धिना गुह्यं वर्णमालाधिकम्प्रिये ॥" इत्यभिधानात्। "गोमुखादौ ततो मालाङ्गोपयेन्मातृ जारवत् ॥" इति मायातन्त्रेऽभिधानाच्च। विशेषान्तरंतु वैशंपायनसंहितायाम् "अङ्गुष्ठमध्य माभ्याञ्च चालयेन्मध्यमध्यतः। तर्ज्जन्या न स्पृशेदेनाम्मुक्तिदो गणनक्रमः ॥ जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वाशतञ्जपेत्। प्रमादात्पतिते हस्ताच्छतमष्टोत्तरञ्जपेत्। जपेन्निषिद्धसंस्पर्शे क्षाल यित्वा यथोचितम्।" छिन्नेप्यष्टोत्तरशतजपः छिन्नकरभ्रष्टयोस्तुल्यत्वादिति। अथाक्षमालादिषु कृत

स्य मन्त्रजपस्य सङ्ख्याकरणद्रव्यनिषेधविधी आह यामले—" नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न्न च पुष्पकैः । न चन्दनैर्म्मृत्तिकया जपसङ्ख्यां तु कारयेत् ॥ लाक्षाकुसीदं सिन्दूरं गोमयञ्च करीषकम् । एभिर्न्निर्म्माय गुटिकाञ्ज पसङ्ख्यान्तु कारयेत् ॥ " इति । कुसीदं रक्तचन्दनम् । करीषं शुष्कगोमयमिति । अथागमोक्तपूजोपयोगितत्तन्मुद्रालक्षणं क्रमेण लिख्यते—" ऋज्वीञ्च मध्यमाङ्कृत्वा तर्ज्जनीमध्यपर्वणि । संय्योज्याकुञ्चयेत्किञ्चिन्मुद्रैषा कुशसंज्ञिका ॥ इति ॥ १ ॥ अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः । तथैव तर्ज्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥ २ ॥ अंगुष्ठाग्रेण तर्ज्जन्याः संयोज्याथोर्द्ध्वरेखया । अन्यांगुलीस्तथानम्य नाराचः स्यात्प्रसार्य्यते ॥ ३ ॥ तर्ज्जन्यंगुष्ठांगुलिध्वनिश्छोटिका । कनिष्ठांगुष्ठकौ शक्तौ करयोरितरेतरम् । तर्ज्जनीमध्यमानामा संहता भुग्नवर्ज्जिता । मुद्रैषा गालिनी प्रोक्ता शंखस्योपरि चालिता ॥ ४ ॥ " दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् । अंगुष्ठौचालयेत्सम्यङ्मुद्रेयम्मत्स्यरूपिणी ॥५॥ वामहस्तस्य तर्ज्जन्यान्दक्षिणस्य कनिष्ठया । तथा दक्षिणतर्ज्जन्यां वामांगुष्ठेन योजयेत् ॥ उन्नतन्दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ॥ अङ्गुलीर्य्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥ कूर्म्मपृष्ठसमङ्कुर्य्याद्दक्षपाणिञ्च सर्व्वतः ॥ कूर्म्ममुद्रेयमाख्याता देव

ताध्यानकर्म्मणि ॥ ६ ॥ हस्ताभ्यामञ्जलिम्बद्ध्वानामिकामूलपर्व्वणोः । अङ्गुष्ठौ निःक्षिपेत्सेयम्मुद्रा त्वावाहनी स्मृता ॥ ७ ॥ अधोमुखी त्वियञ्चेत् स्यात् स्थापनी मुद्रिका स्मृता ॥ ८ ॥ उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संय्योगात्सन्निधापिनी ॥ ९ ॥ अंतःप्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ॥ १० ॥ उत्तानमुष्टियुगला सम्मुखीकरणी मता ॥ ११ ॥ तर्जनीमध्यमानामाः समं कुर्य्यादधोमुखम् ॥ अनामायांक्षिपेद्वृद्धामृज्वींकृत्वा कनिष्ठिकाम् ॥ ललिहा नाम मुद्रेयञ्जीवन्यासे प्रकीर्तिता ॥ १२ ॥ सव्यहस्तकृतामुष्टिर्दीर्घाधोमुखतर्जनी ॥ अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥ १३ ॥ दक्षिणा निबिडा मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितोभ्रा मिता मता ॥ १४ ॥ अन्योन्यग्रथितांगुष्ठा प्रसारितपरांगुली । महामुद्रेयमुदिता परमीकरणे बुधैः ॥ १५ ॥ कनिष्ठामूलसंलग्नावंगुष्ठौ गन्धमुद्रिका ॥ १६ ॥ अंगुष्ठमूललग्ने च तर्ज्जन्यौ पुष्पमुद्रिका ॥ १७ ॥ अङ्गुष्ठे तर्ज्जनीमूलयोगः स्याद्धूपमुद्रिका ॥ १८ ॥ अंगुष्ठे मध्यमामूलयोगे स्याद्दीपमुद्रिका । हस्तौ तु संमुखौ कृत्वा सन्नतप्रोत्थितांगुली ॥ तलान्तर्म्मिलितांगुष्ठौ सुभुग्नौ सुप्रसारितौ । कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसञ्ज्ञिका ॥ १९ ॥ अङ्गुष्ठेनामिकामूलयोगो नैवेद्य

मुद्रिका ॥ २० ॥ पद्माभश्च वामहस्तो ग्रासमुद्रा प्रकीर्त्तिता ॥ २१ ॥ कनिष्ठानामिकाङ्गुष्ठैर्दक्षहस्तस्य संय्युतैः ॥ कथिता मुनिभिः प्राणमुद्रा परमदुर्ल्लभा ॥ २२ ॥ तर्ज्जनीमध्यमाङ्गुष्ठैरपानस्य तु सा स्मृता ॥ २३ ॥ सा मुद्रा ॥ अनामामध्यमाङ्गुष्ठैरुदानस्य च मुद्रिका ॥ २४ ॥ तर्ज्जन्यनामामध्याभिः साङ्गुष्ठाभिश्चतुर्थिका ॥ २५ ॥ चतुर्थिका व्यानमुद्रा ॥ ॥ मुद्राङ्गुलीभिः सर्व्वाभिरुदानस्य प्रकीर्त्तिता ॥ २६ ॥ संयुतैरिति सर्व्वत्र तृतीयान्तेनान्वेति । मध्याभिरित्यादौ लिङ्गविपारिणामेनेति ज्ञेयम् ॥ अधोमुखे वामहस्ते ऊर्द्ध्वास्यन्दक्षहस्तकम् ॥ क्षिप्त्वाङ्गुलीरङ्गुलीभिः सङ्ग्रथ्य परिवर्त्तयेत् । एषा संहारमुद्रा स्याद्विसर्ज्जनविधौ स्मृता ॥ २७ ॥ तत्तन्मुद्राकरणासामर्थ्ये तत्तन्मुद्राध्यानेन पुष्पप्रक्षेपेण तत्त्वमुद्रया वा न्यासोपचारादिकङ्कर्त्तव्यम् ॥ गौतमीतन्त्रे—“ मनसा विन्यसेत्तास्ताः पुष्पेणैवाथ वा मुने । अङ्गुष्ठानामिकाभ्यां वा चान्यथा विफलम्भवेत् ॥ ” इत्यभिधानात् ॥ ॥ इति पूजापङ्कजभास्करे आगमोक्तेष्टदेवतापूजाकथनन्नाम सप्तदशः प्रकाशः ॥ १७ ॥

अथ काम्या पार्थिवशि
न्नित्याया अपि ब्रह्मपूजातः
कर्त्तव्यता ब्रह्मपुराणे उक्ता–
णिः पिनाकधृक्। पशुपतिः
मृत्तिकाग्रहणे चैवघट्टने च प्र
पूजने च विसर्ज्जने ॥ हरा
न्तानि कीर्त्तयेत् ॥ एवञ्च
मालाम्परिधाय ॐ हराय
ॐ महेश्वराय नम इति सङ्
ॐ शूलपाणे इह सुप्रतिष्ठि
कसंस्कारं विधाय " ध्याये
न्नित्यं चारुचन्द्रावतंसं रत्नाक



वलिङ्गपूजा। सा चाचारा
प्रागेव विधेया तस्या इति
" हरो महेश्वरश्चैव शूलपा
शिवश्चैवमहादेवेति सज्जयेत्
तिष्ठने । आवाहने च स्नपने
दीनि च नामानि महादेवा
भस्मत्रिपुण्ड्रं विधाय रुद्राक्ष
नम इति शुभमृत्तिकामाहत्य
घट्टय ॐ शूलपाणये नमः
तो भव इति पूज्यत्वप्रयोज
न्नित्यम्महेशं रजतगिरिनि
भम्पोज्ज्वलाङ्गम्परशुमृगवरा

भीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्वबीजन्निखिलभ यहरम्पञ्चवक्त्रन्त्रिनेत्रम् ॥ " इति ध्यात्वा ॐ पिनाकधृजे नमः ॐ पिनाकधृक् इहागच्छेहतिष्ठेत्या वाह्य स्थापयित्वा ॐ पशुपतये नमः एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ पशुप तये नमः इति पाद्यादीनि दत्त्वा ॐ नमः शिवाय एष गन्धः ॐ शिवाय नमः इति गन्धान्द द्यात् । तत एवमेवाक्षतपुष्पबिल्वपत्रधूपदीपताम्बूलयज्ञोपवीतवस्त्रालङ्कारनैवेद्यानि दद्यात् । ततो वामावर्त्तेन लिङ्गपूर्व्वाद्याग्नेय्यान्तमष्टसु दिक्षु वेद्यामष्टमूर्त्तीर्व्वक्ष्यमाणमन्त्रैर्गन्धाक्षतपुष्पैः पूजयेत् । मन्त्रा यथा–ॐशर्वाय क्षितिमूर्त्तये नमः १। ॐ भवाय जलमूर्त्तये नमः ॐ २। रुद्रायाग्निमूर्त्तये नमः ३ । ॐ उग्राय वायुमूर्त्तये नमः ४ । ॐ भीमायाकाशमूर्त्तये नमः ५ । ॐ पशुपतये यजमानमूर्त्तये नमः ६। ॐ महादेवाय सोममूर्त्तये नमः ७ । ॐईशानाय सूर्य्यमूर्त्तये नमः ८ । इति । तथा च भवि ष्यपुराणे विष्णुवाक्यम्–" साधुसाधु द्विजश्रेष्ठ साधु पृष्टोस्मि सुव्रत । शृणुष्व गदतः सर्वं शिवमन्त्र गणम्परम् ॥ " इत्युक्त्वाऽष्टमन्त्रानभिधाय " मूर्तयोष्टौ शिवस्यैताः पूर्व्वादिक्रमयोगतः । आग्नेय्या न्ताः प्रपूज्याश्च वेद्यां लिङ्गे शिवं यजेत् ॥ " शिवमिति ॐ नमः शिवायेति मंत्रेण लिङ्गे शिवम्पू

जयेत् । ततोष्टमूर्तिरुक्तक्रमेणेतिवाक्यार्थः । तत ॐ महादेवाय नमः ॐ महादेव पूजितोसि प्रसीद क्षमस्व स्वस्थानङ्गच्छेति विसर्ज्जयेत् । ततः ॐ चण्डेश्वराय नमः इति निर्म्माल्यङ्क्षिपेत् । दाक्षिणात्यनिबन्धे प्रयोगपारिजाते क्रियासारे– " अशून्यमस्तकं लिङ्गं सदा कुर्वीत साधकः । " लिङ्गम्पार्थिवशिवलिङ्गम् प्रकरणात् । शूलपाणौ लैङ्गे–" सूतके मृतके चैव न त्याज्यं शिवपूजनम् । विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम् ॥ पादोदकं प्रसादञ्च लिङ्गे चण्डेश्वराय तु ॥ " इत्युक्तम् ॥ इति पूजापङ्कजभास्करे पार्थिवशिवलिङ्गपूजनन्नामाष्टादशःप्रकाशः ॥ १८ ॥



## अथ ब्रह्मपूजा ।

साचस र्व्वदेवतापूजोपकरणद्रव्यैः प्रतिपत्तिरूपेण ॐ ब्रह्मणे नम इति भूमौ कार्य्या । अस्य ध्यानम्–ब्रह्मा चतुर्म्मुखः पद्मगर्भवर्णश्चतुर्भुजः ।उर्ध्वाधः क्रमेण दक्षिणहस्ताभ्यां स्रुवं स्रुचञ्च दधानस्तथा वामकराभ्याङ्कमण्डलुन्दण्डञ्च दधानः शुक्लाम्बरपरीधानो मृगचर्मोत्तरीयो दिव्ययज्ञोपवीती कदा

चिह्नंसारूढः कदाचित्कमलासनः दक्षिणपार्श्वे सन्निधौ आज्यस्थाली सरस्वती च चत्वारो वेदाश्च वाम पार्श्वे सावित्री यस्य स इति । ननु पद्मपुराणप्रथमखण्डे—"यदि मेस्ति तपस्तप्तङ्गुरवस्तोषिता यदि । सर्व्वब्रह्मसमूहेषु स्थानेषु विविधेषु च ॥ न तु,ते ब्राह्मणाः पूजां करिष्यन्ति कदाचन ॥ " इति सा वित्रीकृतशापेन ब्रह्मणोऽपूज्यत्वात्तत्पूजाप्रयोगकथनमयुक्तमिति चेन्न ।"पूजयिष्यन्ति ब्रह्माणन्नरा भक्ति समन्विताः । तेषामसौ धनन्धान्यन्दातायुष्यं सुखानि च ॥ " इति गायत्रीकृतशापोद्धारस्य ब्रह्म पूजाफलप्रदर्शकस्य तदग्रे दर्शनेन । " ब्रह्माणं वा प्रतिष्ठाप्य सर्व्वयत्नैर्विधानतः । यत्पुण्यफलमाप्नो ति तदेकाग्रमनाः शृणु॥" इत्यादिना ब्रह्मप्रतिमास्थापनस्याप्यग्रेविधानेन च " अद्य प्रभृतियः पूजा म्मन्त्रयुक्ताङ्करिष्यति । तव मर्त्यो धरापृष्ठे यथान्येषान्दिवौकसाम् । भविष्यति च तद्वंशो दारिद्रो दुःखसंयुतः ॥ " इति स्कन्दपुराणीयसावित्रीकृतशापवचने मन्त्रपूर्व्वामित्यभिधानेन च ब्र ह्मवैवर्त्ते कृष्णखण्डे चतुस्त्रिंशत्तमेऽध्याये कृष्णकृताप्सरःशापोद्धारे—" तव मन्त्रन्न गृह्णन्ति केपि वेश्याभिशापतः । यदन्यदेवपूजायान्तव पूजा भविष्यति ॥ " इति वचने तन्मन्त्रग्रहण स्यैव निषेधेन च शापस्य समन्त्रनित्यपूजामात्रनिवृत्तिपरत्वात् अमन्त्रकनित्यपूजाया निर्व्बाधत्वात

सर्व्वदेवपूजान्ते तत्करणे मानं तु कृष्णकृतशापोद्धारवचनोत्तरार्द्धमेव तत्रान्यदेवपूजायामित्यस्य अन्यदेवपूजायाङ्कृतायां सत्यामित्यर्थात्। सा चावाहनविसर्ज्जनवर्जितैवोचिता गंधपुष्पादिभिर्मिलितैरेकदैव भूमौ तत्पूजाकरणस्याचारसिद्धत्वेन भूमौ चावाहनविसर्ज्जनयोरभावस्य प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्ज्जनवर्ज्जमिति बौधायनेन विधानात्। अत एव शूलपाणौ–ब्रह्मपूजा नित्या सा च यद्यपि देवतान्तरपूजावत्कर्त्तुमुचिता तथापि सर्व्वदेवपूजान्ते पूजोपकरणशेषद्रव्यैः ॐ ब्रह्मणे नम इति मन्त्रेणाचरन्ति शिष्टा इत्यभिहितमिति बोध्यम्॥ ॥ इतिपूजापङ्कजभास्करे ब्रह्मपूजाकथनन्नामैकोनविंशः प्रकाशः॥ १९॥

अथ विंशः प्रकाशः। ततो देवेशं क्षणन्ध्यात्वा ॐ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत्॥ इति ऋचम्पठेदिति गौडाः। "ननु त्रैविद्या मां सोमपाः पूतपापा इत्यादिगतागतङ्कामकामा लभन्ते" इत्यन्तभगवद्गीतानवमाध्यायस्थभगवद्वाक्येन काम्यकर्म्मानुष्ठानस्य मोक्षप्रतिबन्धकत्वावगमात्काम्यपूजादीनामत्र कथनमयुक्तमिति चेन्न काम्यस्यापीश्वराराधनकर्म्मणः कालेन वैराग्यपूर्व्वकनिष्कामपरमेश्व

राराधनपरत्वजननद्वारा ब्रह्मजिज्ञासुत्वसम्पादकत्वेन जिज्ञासायाश्च ज्ञानजनकत्वेन परम्परया मोक्षसाधकत्वादिति बोध्यम् । अत एव भगवद्गीतासप्तमाध्यायस्थ " चतुर्व्विधा भजते माञ्जनाः सुकृतिनोर्ज्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । तेषाञ्ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते"। इति श्लोकटीकायाम्मधुसूदनस्वामिना ये त्वासुरभावरहिताः पुण्यकर्म्माणो विवेकिनस्ते पुण्यकर्म्मतारतम्येन चतुर्व्विधाः सन्तो माम्भजन्ते क्रमेण कामनाराहित्येन मत्प्रसादान्मायान्तरन्तीत्याह । चतुर्व्विधा भजन्ते मामित्यादि इत्यवतार्य्य ये सुकृतिनः पूर्वजन्मकृतपुण्यसञ्चया जनाः सफलजन्मानस्ते एव नान्ये माम्भजन्ते सेवन्ते हे अर्ज्जुन तत्र त्रयः सकामाः एकोऽकाम इत्येवञ्चतुर्व्विधाः तत्र आर्त्तः आर्त्या शत्रुव्याध्याद्यापदा ग्रस्तस्तन्निवृत्ति मिच्छन्यथा मखभङ्गेन कुपिते इन्द्रे व्रजवासी जनः इत्याद्युक्ता जिज्ञासुर्मुमुक्षुरात्मज्ञानार्थी यथा मुचुकुंदजनकश्रुतदेवोद्धवादयः । 'अर्थार्थी इह वा परत्र वा यद्भोगोपकरणन्तल्लिप्सुः' तत्र इह यथा सुग्रीवो विभीषणश्च परत्र यथा ध्रुवः, एते त्रयोपि भगवद्भजनेन मायान्तरन्ति तत्र जिज्ञासुर्ज्ञानोत्पत्त्या साक्षादेव मायान्तरति आर्त्तोऽर्थार्थी च जिज्ञासुत्वम्प्राप्येति विशेषः इत्यभिहितम् न च सूर्य्यादीनामीश्वरत्वाभावात्तदीयका

म्यपूजनादीनां बन्धकत्वं स्यादेवेति वाच्यम् "येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेपि मामे
व कौन्तेय यजन्त्यविधिपूर्व्वकम्॥अहं हि सर्व्वयज्ञानाम्भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति त
त्त्वेनातश्च्यवंति ते॥" इति भगवदुक्तेः परमेश्वराभेदबुद्ध्या तदीयकाम्यपूजनस्यापि परम्परया मोक्षसा
धकत्वावगमात्। अत्राविधिपूर्वकमित्यस्य विधिः परमेश्वराभिन्नत्वबुद्धिस्तद्रहितत्व पूर्व्वकमित्यर्थः।
तेनेश्वरबुद्ध्या तेषाङ्काम्यपूजनस्यापि मोक्षजनकत्वं बुद्धिसत्त्वशुद्धिद्वाराभवतीत्यायाति। वस्तुतो ना
नोपनिषत्पुराणेतिहासेभ्यो ब्रह्मविष्णुशिवदुर्गागणेशाग्नीनां मायावच्छिन्नचैतन्यरूपत्वावगमात्तेषामी
श्वरत्वं निर्बाधमेवेति न काप्यनुपपत्तिः। ते चोपनिषदादयो ग्रन्थविस्तरभिया न लिखिता इति बोध्य
म्। किञ्च फलप्रदर्शनं रोचनार्थमेव न तु तत्फलकाममात्रस्य प्रवृत्त्यर्थम् अत एव "वेदोक्तमेव कुर्वाणो
निःसङ्गोऽर्पितमीश्वरे। नैःष्कर्म्म्यांल्लभते सिद्धिं रोचनार्था फलश्रुतिः॥" इत्येकादशस्कन्धभागवततृती
याध्यायेभिधानात्। अत्र श्रीधरः—रोचनार्था कर्म्मणि रुच्युत्पादनार्था अगदपाने खण्डलड्डुकादिवत्
यथा पिता बालम्प्रति ब्रवीति पिब पुत्रौषधं खण्डलड्डुकादींस्ते दास्यामीति तत्र न खण्डलड्डुका
दिलाभो गदपानस्य फलम् अपि तु रोगनाशस्तद्वत्। ततश्च कर्म्माभिरुच्या वेदार्थं विचारयति त

था च " यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः ॥ " इत्यनात्मज्ञस्य कृपणता " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन च ॥ " इति यज्ञादीनां ज्ञानशेषताञ्चावधार्य्य निष्कामेषु कर्म्मसु प्रवर्त्तते ततश्च " स्वर्ग्गकामोऽश्वमेधेन यजेत" इत्यादिभिः कामितस्यैव स्वर्ग्गादेः फलत्वेनावगमादकामितोऽसौ न भवतीति नैष्कर्म्म्यसिद्धिर्भवतीति अत एव भगवद्गीताष्टादशाध्याये " एतान्यपि तु कर्माणि सङ्गन्त्यक्त्वा फलानि च । कर्त्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम् ॥ " इति । अत्र सङ्गन्त्यक्त्वेत्यादेः सङ्गमहङ्करोमीति कर्तृत्वाभिनिवेशं फलानि चाऽभिसन्धीयमानानि त्यक्त्वांतःकरणशुद्धये कर्म्माणि कर्त्तव्यानीति मे मतम् अत एव हे पार्थ कर्म्माधिकृतैः कर्म्माणि त्याज्यानि न त्याज्यानि चेति द्वयोर्म्मतयोर्न्न त्याज्यानीति मम निश्चितम्मतमुत्तमं श्रेष्ठमित्यर्थः इति मधुसूदनस्वामी । द्वादशेऽध्यायेऽपि—"अथैतदप्यशक्तोसि कर्त्तुम्मद्योगमाश्रितः । सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान्॥" इति।अत्र श्रीधरः—न शक्तोसि तर्हि मद्योगं मदेकशरणन्त्वमाश्रितः सन् सर्व्वेषान्दृष्टादृष्टानामावश्यकानाञ्चाग्निहोत्रादिकर्म्मणाम्फले नियतचित्तो भूत्वा परित्यजाएतदुक्तं भवति मया तावदीश्वराज्ञया यथाशक्ति कर्म्माणि कर्त्तव्या

ने फलन्तावद्दृष्टमदृष्टं वा परमेश्वराधीनमित्येवम्मयि भावमारोप्य फलासक्तिं परित्यज्य वर्त्तमानो म
प्रसादेन कृतार्थो भविष्यसीति तात्पर्य्यमिति । पञ्चमेऽध्यायेऽपि—"ब्रह्मण्याधाय कर्माणि सङ्गन्त्य
क्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ " इति । अत्रानंदगिरिः—भृत्यवदीश्व
रार्थकर्मकरणाद्वा न तत्फलभागित्वं यथा भृत्यः स्वाम्यर्थङ्कर्म्माणि करोति न फलमपेक्षते तथैव यो
वेद्वान्मोक्षेपि फलन्त्यक्त्वा भगवदर्थमेव सर्व्वाणि कर्म्माणि करोति न स कर्म्मणा बद्ध्यते यथा न
हि पद्मपत्रमम्भसा सम्बध्यते तद्वदित्यर्थ इति फलस्य ब्रह्मणि समर्प्पणाद्वा न कर्म्मणां बन्धकत्वम्
'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्प्पणम् ॥"
ति नवमाध्यायोक्तेः । अत्र शङ्करानंदः शुभाशुभफलैरिति एवमीश्वरार्प्पणबुद्ध्या वैदिकमवै
दिकञ्च युक्तङ्कर्म्म कुर्वाणस्त्वं शुभाशुभफलैः सुखदुःखप्रदैः स्वर्गनरकहेतुभिर्व्वा कर्म्मबन्धनैः
कर्म्माण्येव बन्धनानि तैर्म्मोक्ष्यसे मुक्तो भविष्यसि । ननु कर्म्मण्येवाधिकारस्ते इति "नियतङ्कुरु
कर्म्म त्वम् इति स्वधर्म्मम् इति च विहितानामेव कर्मणाङ्कर्त्तव्यत्वविधानात् कथं विहितानामशुभ
फलत्वमिति चेन्न विहितानामनुष्ठानवैकल्येऽशुभफलहेतुत्वोपपत्तेः यस्याग्निहोत्रदर्शपौर्णमासचातुर्म्मा

स्यमनाग्रयणमतिथिवर्ज्जितञ्च अहुतमवैश्वदेवमविधिनाहुतमासप्तमाँस्तस्यलोकान् हिनस्तीति स वा ग्वज्ञो यजमानं हिनस्ति" इत्यादि श्रुतेः स्मृतेश्च "मन्त्रतन्त्रस्वरवर्णद्रव्यकालादिनियमवैपरीत्ये स्कन्ने भिन्ने च विहितानामप्यशुभफलकारित्वमुपपद्यतइतीति दिक् ॥

श्रीगुणेश्वरसिंहेन मिथिलाधिपसूनु ना ।
निर्म्मापितोऽभवत्पूर्णः पूजापङ्कजभास्करः ॥ १ ॥
सूर्येभास्यहुताशनस्य शिवयोः श्रीशस्य च ब्रह्मणः
पूजापङ्कजभास्करोयममलः प्रीत्यै चिरन्तिष्ठतु ॥
लोकानां शिशिरे हिमे च मिहिरो भूसंस्थितानामिव
पात्वन विदुषां सदा सुखकरं लक्ष्मीपतिः सद्गतिः ॥ २ ॥
शाके वेदवियन्नागहिमांशुवलिते १८०४ शुभे ॥
पौषे सिते पञ्चदश्यां ग्रन्थोऽयं पूर्णतामगात् ॥ ३ ॥
इतिपूजापंकजभास्करे विंशः प्रकाशः ॥ २० ॥　　॥ समाप्तोऽयं ग्रन्थः ॥

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-६८७१०२५,
फैक्स -०२०-६८७४१०७.

**गंगाविष्णु श्रीकृष्णदास,**
लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली; अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष/फैक्स- ०२५१-२२०१०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-४२०००३८.

SHRIKRISHNADASS

